# विक्रमोर्वशी ।

[ त्रोटकम् ]

महाकवि श्रीकालिदासविरचिता ।

पण्डितकुलपतिना,

बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया परिशोभिता ।

तदात्मजाभ्यां

पण्डित-श्रीआशुबोध-विद्याभूषण-

पण्डित-श्रीनित्यबोध-विद्यारत्नाभ्यां

परिवर्द्धितटीकयाऽलङ्कृत्य संस्कृत्य च प्रकाशिता ।

चतुर्थं संस्करणम् ।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रिता ।

ई १८२५



प्रकाशक— पण्डित-श्रीआशुबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान— २नं०, रमानाथ मजुमदार ष्ट्रीट्, आम्हार्ष्ट-
ष्ट्रीट् पोष्ट-अफिस। कलिकाता।

प्रिण्टर—वि, वि, मुखर्जी।
२ नं०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।



# विक्रमोर्वशी ।

## प्रथमोऽङ्कः ।

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥ (१)

नान्द्यन्ते (२) सूत्रधारः ।

---

(१) वेदान्तेष्विति ।—वेदान्तेषु उपनिषत्सु यं देवं रोदसी द्यावापृथिव्यौ व्याप्य स्थितं सर्वव्यापिनमित्यर्थः । एकपुरुषम् अद्वितीयमाहुः वर्णयन्तीत्यर्थः । "अस्मिन् द्यौः पृथिवी चान्तरीक्षमोतं मनः सह प्राणैश्च सर्वैः तमेवैकं जानीथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः" । इति श्रुतिः । तथा, नास्ति अन्यस्तद्भिन्नः कश्चित् विषयो वाच्यो यस्य स तथाभूतः ईश्वर इति शब्दः यस्मिन् देवे यथार्थाक्षरः सार्थकः अणिमाद्यष्टैश्वर्य्यसद्भावादित्यर्थः । तथा, नियमिताः अन्तर्निरुद्धाः प्राणादयो प्राणापानसमानोदानव्यानाख्याः पञ्च शरीरवायवः यैस्तैस्तथाभूतैर्मुमुक्षुभिर्मुक्तिमिच्छुभिर्योगिभिरित्यर्थः । यश्च अन्तरात्मनि मृग्यते अन्विष्यते । "एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं ये नु पश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्" इति । तस्यात्मनि दर्शनोपदेशः । स्थिरा अचला या भक्तिस्तस्याः योगेन सम्पर्केण सुलभः सुप्रापः सुगम इत्यर्थः । स स्थाणुः शिवः वो युष्माकं निःश्रेयसाय क्षेमाय अस्तु, मुक्तिप्रदो भवतु इत्यर्थः । शार्दूलविक्रीडितं छन्दः ।

(२) नान्द्यन्ते इति ।—नान्दीलक्षणं यथा,—"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मात् नान्दीति संज्ञिता ।"

सूत्र। अलमतिविस्तरेण। [ नेपथ्याभिमुखमवलोक्य ]। मारिष! परिषदेषा पूर्वेषां कवीनां दृष्टरसप्रबन्धा; अहमस्यां कालिदासग्रथितवस्तुना नवेन त्रोटकेन उपस्थास्ये, तदुच्यतां पात्रवर्गः, स्वेषु स्थानेषु अवहितैर्भवितव्यं भवद्भिरिति। ( ३ )

नटः। [ प्रविश्य ] यथाज्ञापयति देवः।

सूत्र। यावदस्यामार्य्यविदग्धमिश्रान् शिरसा प्रणिपत्य विज्ञापयामि।—

प्रणयिषु दाक्षिण्यवशादथवा सद्वस्तुबहुमानात्।
शृणुत जना! अवधानात् क्रियामिमां कालिदासस्य॥ (४)

नेपथ्ये। [ अज्जा! परित्ताअध परित्ताअध ]। (क)

सूत्र। अये! किमयमकस्माद्विमानचारिणामाकाशे करुणध्वनिः श्रूयते? [ विचिन्त्य ]। आं ज्ञातम्, भवतु।—

ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री
कैलासनाथमुपसृत्य निवर्त्तमाना।

---

(क) आर्य्याः! परित्रायध्वं परित्रायध्वम्।

---

(३) मारिष इति सूत्रधारकृतं पारिपार्श्विकसम्बोधनम्। "सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः। सूत्रधारो मारिषेति" इत्यादि दर्पणे। परिषत् सभा. दृष्टरसप्रबन्धा दृष्टो रसप्रबन्धः शृङ्गारादिरसबहुलः प्रबन्धः सन्दर्भः यया। त्रोटकेन त्रोटकाख्यदृश्यकाव्येन इत्यर्थः। तल्लक्षणं यथा—"सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्। त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम्॥" इति दर्पणकारधृतवचनम्। पात्रवर्गः नटसम्प्रदायः। स्वेषु स्थानेषु स्वकीयेषु कर्त्तव्यपदेषु इत्यर्थः। अवहितैः अप्रमत्तैः।

(४) प्रणयिष्विति।—प्रणयिषु सुहृत्सु याचकेषु वा। दाक्षिण्यं परच्छन्दानुवर्त्तित्वं, तद्वशात् तद्धेतोः अस्मासु अनुग्रहबुद्ध्येति भावः। सद्वस्तुबहुमानात् सत् दोषरहितं यद्वस्तु इतिवृत्तं तस्मिन् बहुमानं समादरः तस्मात्। अन्यत् स्पष्टम्।

वन्दीकृता विबुधशत्रुभिरर्द्धमार्गे
क्रन्दत्यतः शरणमप्सरसां गणोऽयम् ॥ (५)

[ इति निष्क्रान्तौ ]।

## प्रस्तावना ( ६ )।

[ ततः प्रविशन्ति अपटीक्षेपेण अप्सरसः ]। (७)

अप्सरसः। अज्जा ! परित्ताअध परित्ताअध, जो अमर-पक्खवादी, जस्स वा अम्बरदले गदी अत्थि। ( ख )

[ ततः प्रविशति अपटीक्षेपेण रथारूढ़ो राजा सूतश्च। ]

राजा। अलमाक्रन्दितेन ; सूर्य्योपस्थानसन्निवृत्तं पुरूरवसं मामेत्य कथ्यतां, कुतो भवत्यः परित्रातव्याः इति। (८)

रम्भा। असुरावलेवादो। ( ग )

---

( ख ) आर्य्याः ! परित्रायध्वं परित्रायध्वं, योऽमरपक्षपाती, यस्य वा अम्बरतले गतिरस्ति।

( ग ) असुरावलेपात्।

---

( ५ ) ऊरुद्भवा इति।—नरस्य तन्नामधेयस्य मुनेः सखा तस्य मुनेः नारायणस्य ऊरुद्भवा ऊरोरुत्पन्ना सुरस्त्री अप्सराः उर्वशीत्यर्थः। कैलासनाथं कुवेरम् उपसृत्य स्तुतिवन्दनादिकं कृत्वेत्यर्थः निवर्त्तमाना प्रत्यागच्छन्ती अर्द्धमार्गे अर्द्धपथे विबुधशत्रुभिः दानवैः वन्दीकृता धृता बद्धा वा, अतः कारणात् अयमप्सरसां गणः शरणं क्रन्दति, साहाय्यार्थं कमपि शरणमुद्दिश्य रोदिति इत्यर्थः। वसन्ततिलकं छन्दः।

( ६ ) प्रस्तावनालक्षणं यथा।—"नटी विदूषको वापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते। चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत् तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा॥"

( ७ ) अपटीक्षेपेण यवनिकाऽपसारणं विनैव। पात्रप्रवेशावसरे यवनिकापसारणनियमः, अत्र तु अप्सरसां सम्भ्रमसाध्वसद्योतनाय यवनिकाऽपसारणं विनैव प्रवेशः। तदुक्तं,—"पटीक्षेपो न कर्त्तव्यः आर्त्तराजप्रवेशने" इति।

( ८ ) सूर्य्योपस्थानात् सन्निवृत्तं सूर्य्यमुपास्य प्रत्यागच्छन्तमित्यर्थः।

राजा। किमसुरावलेपेन भवतीनामपराद्धम् ? (९)

रम्भा। सुणादु महाराओ ; जा तवोविसेससङ्किदस्स सुउमारं पहरणं महेंदस्स, पच्चादेसो रूवगव्विदाए सिरिगोरिए, अलङ्कारो सग्गस्स, सा णो पिअसही कुवेरभवणादो णिअत्तमाणा केणावि दाणवेण चित्तलेहादुदिआ अद्धपधज्जेव णिग्गिहिदा। (घ)

राजा। परिज्ञायते कतमेन दिग्विभागेन गतः स जाल्मः ?

अप्सरसः। इसाणीए दिसाए। (ङ)

राजा। तेन हि मुच्यतां विषादः, यतिष्ये वः सखी-प्रत्यानयनाय।

अप्सरसः। [सहर्षं] सरिसम् एदं सोमवंससम्भवस्स। (च)

राजा। क्व पुनर्मां भवत्यः प्रतिपालयिष्यन्ति ? (१०)

अप्सरसः। एदस्सिं हेमकूड़सिहरे। (छ)

राजा। सूत ! ऐशानीं दिशं प्रति प्रेरयाश्वानाशुगमनाय।

सूतः। यथा आज्ञापयति आयुष्मान्। [इति तथा करोति]।

---

(घ) शृणोतु महाराजः, या तपोविशेषशङ्कितस्य सुकुमारं प्रहरणं महेन्द्रस्य, प्रत्यादेशो रूपगर्विताया: श्रीगौर्य्याः, अलङ्कारः स्वर्गस्य, सा नः प्रियसखी कुवेरभवनात् निवर्त्तमाना केनापि दानवेन चित्रलेखाद्वितीया अर्द्धपथ एव निगृहीता।

(ङ) ऐशान्या दिशा।

(च) सदृशमेतत् सोमवंशसम्भवस्य।

(छ) एतस्मिन् हेमकूटशिखरे।

---

(९) असुराणामवलेपेन गर्वेण किमपराद्धम् ? युष्माकं का बाधा सम्पादिता इत्यर्थः।

(१०) प्रतिपालयिष्यन्ति मां प्रतीक्ष्य वर्त्तिष्यन्ते इत्यर्थः।

राजा। [ रथवेगं रूपयित्वा ]। साधु साधु, अनेन रथवेगेन पूर्वप्रस्थितं वैनतेयम् ( ११ ) अपि आसादयेयम्। मम हि—

अग्रे यान्ति रथस्य रेणुपदवीं चूर्णीभवन्तो घना-
श्चक्रभ्रान्तिररान्तरेषु वितनोत्यन्यामिवारावलीम्।
चित्रारम्भविनिश्चलं हयशिरस्यायामवच्चामरं
यन्मध्ये समवस्थितो ध्वजपटः प्रान्ते च वेगानिलात्॥ (१२)

[ इति निष्क्रान्तौ राजा सूतश्च ]।

सहजन्या। हला! गदो राएसी; ता अम्हेवि जधासंदिट्टं पदेसं गच्छम्ह। ( ज )

मेनका। सहि! एव्वं करेम्ह। (झ)

[ इति हेमकूटशिखरे नाट्येन अधिरोहन्ति ]।

( ज ) अयि! गतो राजर्षिः, तत् वयमपि यथासन्दिष्टं प्रदेशं गच्छामः।

( झ ) सखि! एवं कुर्मः।

( ११ ) वैनतेयं विनतानन्दनं गरुड़मपि।

( १२ ) रथस्य अग्रे समीपे चूर्णीभवन्तो जवात् आपतद्भिः चक्रैः प्रतिघातेन अश्वखुरोल्लिखनेन वा चौदीभवन्तो घना मेघाः रेणुपदवीं धूलिसादृश्यं यान्ति प्राप्नुवन्ति। तथा चक्राणां भ्रान्तिर्भ्रमणम् अराणां चक्रमध्यगतकाष्ठखण्डानाम् अन्तरेषु मध्येषु अन्यां द्वितीयाम् अरावलीम् अरपङ्क्तिं वितनोति विस्तारयति चिप्रभ्रमणेन निरन्तरारपङ्क्तिपूरितमिव तच्चक्रं प्रतिभातीति भावः। तथा चित्रः अद्भुतः विस्मयकर इत्यर्थः, य आरम्भः धावनक्रिया तेन निश्चलं निष्कम्पं चामरं हयशिरसि अश्वमूर्द्ध्नि आयामवत् दैर्घ्ययुक्तं वर्त्तते इति शेषः। वेगवशात् दीर्घतराकृतिर्लक्ष्यते इति भावः। तथा वेगानिलात् वेगजातमारुतवशात् ध्वजपटः यस्य रथस्य मध्ये प्रान्ते च उभयोः पार्श्वयोश्च समवस्थितः। महावेग-समुत्थेन वातेन ध्वजपटः कदापि रथमध्ये कदापि प्रान्तयोः पतन् लुठतीति भावः। शार्दूलविक्रीड़ितं छन्दः।

रम्भा। अवि णाम सो राएसी उद्धरे णो हिअअ-सल्लम् ? (ञ)

मेनका। सहि ! मा दे संसओ भोदु। (ट)

रम्भा। णं दुज्जआ दाणवा। (ठ)

मेनका। उअत्थिदसंपहारो (१३) महेंदो वि मज्झम-लोआदो सबहुमाणमाणाबिअ तं ज्जेव विबुधबिजआअ सेणामुहे णिओएदि। (ड)

रम्भा। सव्वधा विजई भोदु। (ढ)

मेनका। [ क्षणमात्रं स्थित्वा ]। हला ! समस्ससध समस्ससध, एस उल्लसिदहरिणकेदणो तस्स राएसिणो सोमदत्तो रहो दीसदि ; ण एसो अकिदत्थो पड़िणिउत्तिस्सदित्ति तक्केमि। ( ण ) [ निमित्तं सूचयित्वा ( १४ ) अवलोकयन्त्यः स्थिताः ]।

[ ततः प्रविशति रथारूढ़ो राजा सूतश्च, भयनिमीलिताक्षी चित्र-लेखादक्षिणहस्तावलम्बिता उर्वशी च ]।

---

( ञ ) अपि नाम स राजर्षिः उद्धरेत् नो हृदयशल्यम् ?

( ट ) सखि। मा ते संशयो भवतु।

( ठ ) ननु दुर्जया दानवाः।

( ड ) उपस्थितसम्प्रहारो महेन्द्रोऽपि मध्यमलोकात् सबहुमानमानाय्य तमेव विबुधविजयाय सेनामुखे नियोजयति।

( ढ ) सर्वथा विजयी भवतु।

( ण ) अयि ! समाश्वसित समाश्वसित, एष उल्लसितहरिणकेतनः तस्य राजर्षेः सोमदत्तो रथो दृश्यते, नैषोऽकृतार्थः प्रतिनिवर्त्तिष्यते इति तर्कयामि।

---

( १३ ) उपस्थितः सम्प्रहारः सङ्ग्रामो यस्य सः।

( १४ ) निमित्तं सूचयित्वा—प्रियलाभद्योतकानि भूनासिकादिस्पन्दनादीनि सङ्गललक्षणानि निरूपयन्त्य इत्यर्थः।

चित्र। सहि ! समस्सस समस्सस। (त)

राजा। सुन्दरि ! समाश्वसिहि समाश्वसिहि।—

गतं भयं भीरु ! सुरारिसम्भवं
त्रिलोकरक्षी महिमा हि वज्रिणः।
तदेतदुन्मीलय चक्षुरायतं
निशाऽवसाने नलिनीव पङ्कजम् ॥ (१५)

चित्र। अम्महे, उस्ससिदमेत्तसम्भाविदजीविदा अज्जवि सस्सम् एसा ण पड़िवज्जदि। (थ)

राजा। बलवदत्र ते सखी परित्रस्ता। (१६) तथा हि,—

मन्दारकुसुमदाम्ना गुरुरस्याः सूच्यते हृदयकम्पः।
मुहुरुच्छ्वसता मध्ये परिणाहवतोः पयोधरयोः॥ (१७)

चित्र। [सकरुणम्]। हला उव्वसि ! पज्जवत्थावेहि अत्ताणअम्, अणच्छरा विअ पड़िहासि। (द)

---

(त) सखि ! समाश्वसिहि समाश्वसिहि।

(थ) आश्चर्यं, उच्छ्वसितमात्रसम्भावितजीविता अद्यापि संज्ञाम् एषा न प्रतिपद्यते।

(द) अयि उर्वशि ! पर्य्यवस्थापयात्मानम्, अनप्सरा इव प्रतिभासि।

---

(१५) गतमिति।—हे भीरु भयशीले ! उर्वशि ! सुरारिसम्भवं दानवद्रोहजनितं भयं भयकारणं गतं निरस्तम्। हि यतः वज्रिणः इन्द्रस्य महिमा त्रिलोकरक्षी त्रिभुवनविपदुद्धारसमर्थ इत्यर्थः। तत् तस्मात् निशाऽवसाने रात्रिशेषे नलिनी पङ्कजमिव पद्मपलाशमिव एतत् आयतं सुविशालं चक्षुरुन्मीलय। वंशस्थविलं छन्दः।

(१६) बलवत् परित्रस्ता नितरां भीतेत्यर्थः।

(१७) परिणाहवतोः सुविशालयोः पीनयोरित्यर्थः पयोधरयोः स्तनयोः मध्ये अन्तरप्रदेशे मुहुर्वारंवारम् उच्छ्वसता प्रकम्पिणा मन्दारकुसुमदाम्ना मन्दारपुष्पविरचितया स्रजा अस्याः गुरुर्बलवान् हृदयकम्पः सूच्यते द्योत्यते। आर्य्या छन्दः।

राजा ।—

मुञ्चति न तावदस्या भयकम्पः कुसुमकोमलं हृदयम् ।
सिचयान्तेन कथञ्चित् स्तनमध्योच्छासिना कथितः॥ (१८)

उर्वशी । [ चैतन्यं प्रत्यागच्छति ] ।

राजा । [ सहर्षम् ] । चित्रलेखे ! दिष्ट्या वर्द्धसे, प्रकृतिमापन्ना ( १९ ) ते प्रियसखी । पश्य,—

आविर्भूते शशिनि तमसा रिच्यमानेव रात्रि-
र्नैशस्यार्चिर्हुतभुज इव छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुच्यमाना,
गङ्गा रोधःपतनकलुषा गच्छतीव प्रसादम् ॥ (२०)

चित्र । हला उव्वसि ! विस्सत्था होहि, आवस्साणुकम्पिणा महाराएण पराहदा क्खु ते तिदसपरिबंथिणो हदासा दाणवा । (ध)

---

(ध) अयि उर्वशि ! विश्वस्ता भव, आपन्नानुकम्पिना महाराजेन पराहताः खलु ते त्रिदशपरिपन्थिनो हताशा दानवाः ।

---

( १८ ) स्तनमध्योच्छासिना स्तनान्तरे कम्पमानेन सिचयान्तेन वस्त्राञ्चलेन कथञ्चित् कष्टेण कथितः सूचितः भयकम्पः दानवत्रासजनितः कम्पः अस्याः कुसुमकोमलं पुष्पसुकुमारं हृदयं न मुञ्चति तावत् अद्यापि न प्रशाम्यतीति भावः । आर्य्याच्छन्दः ।

( १९ ) प्रकृतिमापन्ना चैतन्यं प्राप्ता इत्यर्थः ।

( २० ) अन्तर्मध्ये मोहेन मुच्यमाना शनैः शनैश्चैतन्यमधिगच्छन्तीत्यर्थः इयं वरतनुः उर्वशी । शशिनि चन्द्रे आविर्भूते उदितवति तमसा अन्धकारेण रिच्यमाना मुच्यमाना रात्रिरिव, तथा छिन्नभूयिष्ठधूमा अपगतबहुलधूमा भास्वरा नैशस्य रात्रौ प्रद्योतितस्य हुतभुजः अग्नेः अर्चिः शिखेव लक्ष्यते । अथवा रोधःपतनेन पतिततीरभूमिसहयोगेन कलुषा आविला गङ्गा भागीरथीव पश्चात् प्रसादं गच्छति, तद्वल्लक्ष्यते इति भावः । मन्दाक्रान्ता छन्दः ।

उर्व। [उन्मील्य चक्षुषी] किं सम्पहारदंसिणा महेंदेण अब्भुववण्णम्हि ? (न)

चित्र। ण महेंदेण ; महेंदसरिसाणुभावेण राएसिणा पुरूरवसेण। (प)

उर्व। [राजानमवलोक्यात्मगतम्]। उवकिदं क्खु मे दाणवेंदसम्भमेण। (फ)

राजा। [उर्वशीं विलोक्यात्मगतम्]। स्थाने खलु नारायणमृषिं विलोभयन्त्य ऊरुसम्भवामिमां विलोक्य व्रीड़िताः सर्वा अप्सरसः। अथवा, नेयं तपस्विनः सृष्टिरित्यवैमि। कुतः ?—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः ?
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ?।
वेदाभ्यासजड़ः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ?॥ (२१)

(न) किं सम्प्रहारदर्शिना महेन्द्रेण अभ्युपपन्नास्मि ?

(प) न महेन्द्रेण, महेन्द्रसदृशानुभावेन राजर्षिणा पुरूरवसा।

(फ) उपकृतं खलु मे दानवेन्द्रसम्भ्रमेण।

(२१) अस्याः उर्वश्याः सर्गविधौ सृष्टिक्रियायां कान्तिप्रदः लावण्यप्रदाता चन्द्रः प्रजापतिः स्रष्टा अभूत् ? नु इति प्रश्ने, अभूत् किमित्यर्थः। "स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृग् विधिः" इत्यमरः। किं वा शृङ्गार एव एको मुख्यो रसो यस्य स शृङ्गारैकरसो मदनः स्वयं नु किं प्रजापतिः स्रष्टा अभूत् ? अथवा पुष्पाणां कुसुमानाम् आकरः कुसुमयोनिरित्यर्थः। मासः चैत्रः किं नु प्रजापतिः अभूदिति शेषः। कथमियं जिज्ञासा, इत्याशङ्क्याह,—वेदाभ्यासजड़ इति। अन्यथा वेदाभ्यासजड़ः निरन्तरवेदपाठेन विषयबोधरहित इत्यर्थः। तथा विषयेभ्य इन्द्रियग्राह्येभ्यो रूपरसादिभ्यो व्यावृत्तं प्रतिनिवृत्तं कौतूहलं लालसा यस्य, भोगवासनाविरत इत्यर्थः, एवम्भूतः पुराणो मुनिः कथं केन प्रकारेण इदं मनोहरं रूपं निर्मातुं

उर्व। हला चित्तलेहे ! सहीअणो कहिं क्खु भवे ? (ब)

चित्र। अभअप्पदाई महाराओ जाणादि। (भ)

राजा। [उर्वशीं विलोक्य]। महति विषादे वर्त्तते ते सखीजन: ; पश्यतु भवती।—

यदृच्छया त्वं सकृदप्यवन्ध्ययो:
पथि स्थिता सुन्दरि ! यस्य नेत्रयो:।
त्वया विना सोऽपि समुत्सुको भवेत्
सखीजनस्ते किमु रूढ़सौहृद: ? ॥ (२२)

उर्व। [आत्मगतम्] अमिअं क्खु दे वअणं ; अधवा, चंदादो अमिअं त्ति किम् एत्थ अच्चरीयम् !! [प्रकाशम्]। अदो ज्जेव मे तुवरदि हिअअम्। (म)

राजा। [हस्तेन दर्शयन्]।—

---

(ब) अयि चित्रलेखे ! सखीजन: कुत्र खलु भवेत् ?

(भ) अभयप्रदायी महाराजो जानाति।

(म) अमृतं खलु ते वचनम् ; अथवा चन्द्रतोऽमृतमिति किमत्राश्चर्य्यम् !! अत एव मे त्वरते हृदयम्।

---

प्रभवेत् ? क्व वा रसज्ञानविरहित: पुराणो मुनि: ? क्व चैतत् सौकुमार्य्यम् ? सर्वथा नेयं निर्मिति: जराजीर्णप्रकृति: वेदाभ्यासनियतहतचेतसो नारायणमुने:, अपि तु कस्यापि चन्द्रमदनादिकस्य सुकुमारतरस्य विलसितमेतदिति भाव:। शार्दूलविक्रीड़ितं छन्द:।

(२२) हे सुन्दरि ! त्वं यदृच्छया अनिर्दिष्टकारणेन सकृदपि एकवारमपि यस्य अवन्ध्ययो: सार्थकयो: त्वद्दर्शनलाभादिति भाव:। नेत्रयो: पथि गोचरे स्थिता भवसि, यस्य दर्शनपथं गच्छसीत्यर्थ:। सोऽपि त्वया विना समुत्सुक: पुनस्त्वद्दर्शनाकाङ्क्षया उत्कण्ठितो भवेत्। किमु रूढ़सौहृद: बद्धसख्यस्ते सखीजन: ? चिरपरिचित: सखीजनस्त्वद्दर्शनाशया यत् समुत्सुको भवेत्, तत्र किं वक्तव्यमित्यर्थ:। वंशस्थविलं छन्द:।

एताः सुतनु ! मुखं ते सख्यः पश्यन्ति हेमकूटगताः।
उत्सुकनयना लोकाश्चन्द्रमिवोपप्लवान्मुक्तम् ॥ (२३)

उर्वशी। [ साभिलाषं पश्यति ]।

चित्र। हला ! किं पेक्खसि ? (य)

उर्व। समदुक्खसुहो पीबीअदि लोअणेहिं। (र)

चित्र। [ सस्मितम् ] अइ ! को ? (ल)

उर्व। णं पणइअणो। (व)

मेनका। [सहर्षमवलोक्य ] हला ! एसो चित्तलेहादुदिअं पिअसहीम् उव्वसीं गेण्हिअ, बिसाहासहिदो बिअ भअवं सोमो उवत्थिदो सो राएसी। (श)

रम्भा। [ निर्वर्ण्य ] दुवेबि एत्थ पिआ उवगदा, जं सही पच्चाणीदा, जं च अपरिक्खदसरीरो राएसी दीसदि। (ष)

सहजन्या। सहि ! तुमं भणासि दुज्जओ दाणवो त्ति। (स)

---

(य) अयि ! किं प्रेक्षसे ?

(र) समदुःखसुखः पीयते लोचनाभ्याम्।

(ल) अयि ! कः ?

(व) ननु प्रणयिजनः।

(श) अयि ! एष चित्रलेखाद्वितीयां प्रियसखीम् उर्वशीं गृहीत्वा विशाखासहित इव भगवान् सोमः उपस्थितः स राजर्षिः।

(ष) हे अपि अत्र प्रिये उपगते, यत् सखी प्रत्यानीता, यच्च अपरिक्षतशरीरो राजर्षिर्दृश्यते।

(स) सखि ! त्वं भणसि दुर्जयो दानव इति।

---

(२३) हे सुतनु ! उत्सुकनयनाः कौतूहलाविष्टनेत्रा लोकाः उपप्लवात् राहुग्रासात् मुक्तं चन्द्रमिव चन्द्रं यथा पश्यन्तीत्यर्थः तद्वत् हेमकूटगता एताः सख्यः ते मुखं पश्यन्ति।

राजा। सूत! इदं तच्छैलशिखरम्, अवतारय रथम्।

सूतः। यथाज्ञापयति आयुष्मान्। [इति तथा करोति]।

उर्वशी। [रथावतारक्षोभं नाटयन्ती सवासं राजानमवलम्बते]।

राजा। [स्वगतम्]। हन्त हन्त, सफलो मे विषयावतारः। (२४)—

यदिदं रथसंक्षोभादङ्गेनाङ्गं ममायतेक्षणया।
स्पृष्टं सरोमकण्टकमङ्कुरितं मनसिजेनेव॥ (२५)

उर्व। [सव्रीडा]। (२६) हला! किञ्चिदवरतो ओसर (ङ)।

चित्र। णाहं णाहं सक्का (च)।

रम्भा। एव्वं पिअआरिणं सम्भावेम्ह (२७) राएसिं। (क)

अप्सरसः। एव्वं करेम्ह (ख) [इत्युपसर्पन्ति]।

राजा। सूत! उपश्लेषय रथम्। (२८)—

यावत् पुनरियं सुभ्रूरुत्सुकाभिः समुत्सुका।
सखीभिर्याति सम्पर्कं लताभिः श्रीरिवार्त्तवी॥ (२९)

---

(ङ) सखि! किञ्चिदपरतोऽपसर।

(च) नाहं नाहं शक्ता।

(क) एवं प्रियकारिणं सम्भावयामो राजर्षिम्।

(ख) एवं कुर्मः।

---

(२४) विषये उर्वशीप्रत्यानयनरूपविषये देशे वा अवतारः अवतरणम्, आगमनं वा किंवा इन्द्रियग्राह्यरूपरसादिभोगे अवतरणं मानवजन्मधारणमिति यावत्।

(२५) रथसंक्षोभात् इदं मम अङ्गम् आयतेक्षणायाः अङ्गेन स्पृष्टं सत् यत् सरोमकण्टकं जातं, तत् मनसिजेन अङ्कुरितमिव मन्ये। दर्शनादन्तःसञ्जातमनसिजेन स्पर्शनादङ्कुरितं पुलकच्छलेन बहिरुद्भिन्नमिति भावः। आर्या छन्दः।

(२६) पुलकादिकं राज्ञो भावं दृष्ट्वा सलज्जा इति भावः।

(२७) सम्भावयामः प्रत्युद्गमनप्रियसम्भाषणादिना सत्कुर्मः।

(२८) उपश्लेषय भूमौ अवस्थापय इत्यर्थः।

(२९) यावत् पुनः समुत्सुका उत्कण्ठिता इयं सुभ्रूः उत्सुकाभिः सखीभिः

सूतः। तथा। [ इति रथं स्थापयति ]।

अप्सरसः। दिट्ठिआ महाराओ विजएण वड्ढदि। (ग)

राजा। भवत्यश्च सखीसमागमेन।

उर्वं। [ चित्रलेखादत्तहस्तावलम्बा रथादवतीर्य्य ]। हला! बलियं परिस्सअध मं, ण क्खु मे आसि आसंसा जधा पुणो वि सव्वं सहीअणं पेक्खिस्सं। (घ)

सख्यः। [ परिष्वजन्ते ]।

मेनका। [ साशंसं ]। सव्वधा महाराओ पुहवीं पालयंतो भोदु। (ङ)

सूतः। आयुष्मन्! महता रथवंशेनोद्दर्शितम्, (३०)—

अयञ्च गगनात् कोऽपि तप्तचामीकराङ्गदः।
अधिरोहति शैलाग्रं तड़ित्वानिव तोयदः॥ (३१)

अप्सरसः। अम्मो! चित्तरहो!। (च)

(ग) दिष्ट्या महाराजो विजयेन वर्द्धते।

(घ) अयि! बलवत् परिष्वजध्वं मां, न खलु मे आसीत् आशंसा, यथा पुनरपि सर्वं सखीजनं प्रेक्षिष्ये।

(ङ) सर्वथा महाराजः पृथिवीं पालयन् भवतु।

(च) अहो! चित्ररथः!।

सम्पर्कं याति मिलति इत्यर्थः। किम्भूता? आर्त्तवी श्रीः वसन्तलक्ष्मीः लताभिरिव, यथा लताभिः सह मिलति तद्वदित्यर्थः। वसन्तलक्ष्मीर्यथा लताभिः सङ्गता सती प्रसूनादिना लतानां शोभातिशय्यम् उत्पादयति, तथा उर्वशी तासां विकाशकारणं भवतीति भावः। अनुष्टुप् छन्दः।

(३०) रथवंशेन पताकादण्डेन, उद्दर्शितं सूचितम्।

(३१) तप्तेन सद्यो गलितेन इव चामीकरेण सुवर्णेन निर्मितम् अङ्गदं यस्य सः तप्तचामीकराङ्गदः अयं कोऽपि तड़ित्वान् विद्युल्लेखाविराजितस्तोयदो मेघः इव, विद्युत्वान् मेघो यथा शैलाग्रमधिरोहति तद्वदित्यर्थः। अङ्गदोल्लेखत्वात्तड़ित्व-ड़िशेषणं सार्थकितम्। अनुष्टुप् छन्दः।

[ ततः प्रविशति चित्ररथः ]।

चित्ररथः। [ राजानमुपसृत्य ]। दिष्ट्या महोपकारपर्य्याप्तेन विक्रममहिम्ना वर्द्धसे।

राजा। अये! गन्धर्वराजः! [ रथादवतीर्य्य ]। स्वागतं प्रियसुहृदे। [ अन्योऽन्यं हस्तं स्पृशतः ]।

चित्ररथः। वयस्य! केशिना अपहृतामुर्वशीमुपश्रुत्य प्रत्याहरणार्थमस्याः शतक्रतुना गन्धर्वसेनाः समादिष्टाः। अनन्तरं विमानचारिभ्यस्त्वदीयम्,—

यशोराशिमुपश्रुत्य त्वामिहस्थमुपागतः।
भवानिमां समादाय महेन्द्रं द्रष्टुमर्हति॥ (३२)

महत् खलु त्वया तत्प्रियमनुष्ठितम्। पश्य,—

पुरा नारायणेनेयमभिसृष्टा मरुत्वतः।
दैत्यहस्तादवाच्छिद्य सुहृदा सम्प्रति त्वया॥ (३३)

राजा। सखे! मैवम्,—

ननु! वज्रिण एव वीर्य्यमेतत् विजयन्ते द्विषतो यदस्य पक्षाः।
वसुधाधरकन्दराविसर्पी प्रतिशब्दो हि हरेर्हिनस्ति नागान्॥ (३४)

---

(३२) उपश्रुत्य समाकर्ण्य। इहस्थं हेमकूटशिखरस्थम्। उपागतः सम्प्राप्तः, त्वत्समीपमागत इत्यर्थः। इमाम् उर्वशीम्। अनुष्टुप् छन्दः।

(३३) नारायणेन नारायणाख्यमुनिना। मरुत्वतः इन्द्रस्य निमित्तम् इन्द्रार्थमित्यर्थः, अभिसृष्टा दत्ता। दैत्यहस्तात् अवाच्छिद्य आक्षिप्य त्वया पुनरभिसृष्टा। अनुष्टुप् छन्दः।

(३४) ननु भोः! वज्रिणः इन्द्रस्य एव एतत् वीर्य्यं माहात्म्यं, यत् अस्य इन्द्रस्य पक्षाः सहचरा द्विषतः शत्रून् विजयन्ते। तथा हि हरेः सिंहस्य वसुधाधरकन्दराविसर्पी वसुधाधरस्य भूधरस्य कन्दरां गुहां विसर्पति गच्छति गिरिगह्वरव्यापीत्यर्थः, प्रतिशब्दः प्रतिध्वनिः, नागान् करीन् हिनस्ति पराभवति। सिंहध्वानादेव करिणो दूरं पलायन्ते इति भावः। वयन्तु ध्वानसमा इति तात्पर्य्यम्। औपच्छन्दसिकं वृत्तम्।

चित्ररथः। युक्तम्; अनुत्सुकता खलु विक्रमालङ्कारः। (३५)

राजा। सखे! नायमवसरः शतक्रतुं द्रष्टुम्; अतस्त्वमेव अत्रभवतीं प्रभोरन्तिकं प्रापय। (३६)

चित्ररथः। यथा भवान् मन्यते। इत इतो भवत्यः।

[ इति अप्सरसः प्रस्थिताः ]।

उर्वं। [ जनान्तिकम् ]। (३७) हला चित्तलेहे! उअआरिणं राएसिं ण सक्कणोमि आमंतिदुं, ता तुमं मे मुहं होहि। (छ)

चित्र। [ राजानमुपसृत्य ]। महाराअ! उव्वसी विण्णवेदि, महाराएण अब्भणुण्णादा इच्छामि पिअं विअ महाराअस्स कित्तिअं सुरलोअं णेदुम्। (ज)

राजा। गम्यतां पुनर्दर्शनाय।

[ इति सर्वाः सगन्धर्वा आकाशयानं रूपयन्ति ]। (३८)

---

(छ) अयि चित्रलेखे! उपकारिणं राजर्षिं न शक्नोमि आमन्त्रयितुं, तत् त्वं मे मुखं भव।

(ज) महाराज! उर्वशी विज्ञापयति, महाराजेन अभ्यनुज्ञाता इच्छामि प्रियामिव महाराजस्य कीर्त्तिं सुरलोकं नेतुम्।

---

(३५) अनुत्सुकता स्वगौरवलाभकौतूहलराहित्यम्। सैव विक्रमालङ्कारः पराक्रमस्य भूषणम्।

(३६) आत्मनः प्रशंसालापश्रवणे औदासीन्यात्, न तु इन्द्रस्य उपरि अवगणनया इति भावः। मनस्वितायाः लक्षणमेतत्।

(३७) त्रिपताककरेण मुखमाच्छाद्य यत् परस्परसम्भाषणं तत् जनान्तिकम्। तल्लक्षणं यथा;—"त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम्। अन्योऽन्यामन्त्रणं यत् स्यात् जनान्ते तज्जनान्तिकम्॥" इति।

(३८) आकाशयानं रूपयन्ति आकाशगमनं नाटयन्ति इत्यर्थः।

उर्व। [ उत्पतनभङ्गं रूपयित्वा ]। अम्मो! लदाविड़वे एश्रावली वैजअंतिश्रा मे लग्गा! (३८) [ सव्याजमुपसृत्य राजानं पश्यन्ती ]। सहि चित्तलेहे! मोश्रावेहि दाव णं। (झ)

चित्र। [ विलोक्य विहस्य च ]। श्रां, श्रइ! दिढ़ं क्खु लग्गा, ण सक्कणोमि मोश्राविदुं। (ञ)

उर्व। श्रलं पड़िहासेण, मोश्रावेहि दाव णं। (ट)

चित्र। श्रां, दुम्मोश्रा विश्र मे पड़िहादि, तधावि मोश्राविस्सं दाव। (ठ)

उर्व। [ स्मितं कृत्वा ]। पिश्रसहि! सुमरेसि क्खु एदं अत्तणो वश्रणं। (ड)

राजा।—

प्रियमाचरितं लते! त्वया मे गमनेऽस्याः क्षणविघ्नमाचरन्त्या।
यदियं पुनरप्यपाङ्गनेत्रा परिवृत्तार्द्धमुखी मयाऽद्य दृष्टा॥ (४०)

चित्रलेखा। [ मोचयति ]।

उर्वशी। [ राजानमालोकयन्ती सनिश्वासं सखीजनमुत्पतन्तं पश्यति ]।

---

(झ) अहो! लताविटपे एकावली वैजयन्तिका मे लग्ना। सखि चित्रलेखे! मोचय तावदेनाम्।

(ञ) आं, अयि! दृढ़ं खलु लग्ना, न शक्नोमि मोचयितुम्।

(ट) अलं परिहासेन, मोचय तावदेनाम्।

(ठ) आं, दुर्मोच्येव मे प्रतिभाति, तथापि मोचयिष्यामि तावत्।

(ड) प्रियसखि! स्मरसि खलु एतदात्मनो वचनम्।

---

(३८) एकावली एकयष्टिका वैजयन्तिका पञ्चवर्णमयी जानुपर्य्यन्तलम्बिता माला, वैजयन्तिकायो एकावलीत्वाद्दीर्घत्वाच्च शाखाग्रसंलग्ने विशिष्टोपयोगित्वं व्यज्यते।

(४०) क्षणविघ्नमाचरन्त्या क्षणकालं गमनबाधां जनयन्त्या। अपाङ्गनेत्रा वक्रनयना। औपच्छन्दसिकं वृत्तम्।

सूतः। आयुष्मन्!—

अधः सुरेन्द्रस्य कृतापराधान्
प्रक्षिप्य दैत्यान् लवणाम्बुराशौ।
वायव्यमस्त्रं शरधिं पुनस्ते
महोरगः श्वभ्रमिव प्रविष्टम्॥ (४१)

राजा। तेन हि उपश्लेषय रथं यावदारोहामि।

सूतः। [तथा करोति]।

राजा। [नाट्येनाधिरोहति]।

उर्वशी। [सस्पृहं राजानमवलोकयन्ती]। अवि णाम पुणो वि उअआरिणं एदं पेक्खिस्सं?। (ढ)

[इति सगन्धर्वा सह सखीभिर्निष्क्रान्ता]।

राजा। [उर्वशीवर्त्मोन्मुखः]। अहो! दुर्लभाभिलाषी मदनः।—

एषा मनो मे प्रसभं शरीरात्
पितुः पदं मध्यममुत्पतन्ती।
सुराङ्गना कर्षति खण्डिताग्रात्
सूत्रं मृणालादिव राजहंसी॥ (४२)

[इति निष्क्रान्ताः सर्वे]।

इति प्रथमोऽङ्कः।

---

(ढ) अपि नाम पुनरप्युपकारिणमेतं प्रेक्षिष्ये?।

---

(४१) ते तव वायव्यम् अस्त्रं सुरेन्द्रस्य इन्द्रस्य कृतापराधान् इन्द्रापराद्धानित्यर्थः दैत्यान् अधः लवणाम्बुराशौ लवणसमुद्रे प्रक्षिप्य पुनः शरधिं तूणीरं प्रविष्टम्; किमिव इत्याह,—महोरगः महासर्पः श्वभ्रमिव बिलमिव। "रन्ध्रं श्वभ्रं वपा शुषिः" इत्यमरः, सर्पो यथा बिलं प्रविशति तद्वदित्यर्थः। उपजातिः वृत्तम्।

(४२) पितुः नारायणस्य मध्यमं पदम् आकाशम्। "अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः" इति रघुः। उत्पतन्ती वियन्मार्गेण गच्छन्तीत्यर्थः। एषा सुराङ्गना अप्सराः प्रसभं बलेन मे मम शरीरात् मनः कर्षति।

# द्वितीयोऽङ्कः ।

[ ततः प्रविशति विदूषकः ] । ( १ )

विदू। अविद अविद भो ! णिमंतणिओ परमण्णेण विअ राअरहस्सेण फुटमाणेण ण सक्कणोमि जणाइण्णे अत्तणो जोहां धारिदुं ; ता जाव सो राआ धम्मासणगदो भवे, दाव इमस्सिं विरलजणसंपादे देवच्छंदप्पासादे अहिरुहिअ चिट्ठिस्सं । (क) (२) [ परिक्रम्योपविश्य पाणिभ्यां मुखं पिधाय स्थितः ] ।

[ ततः प्रविशति चेटी ] ।

चेटी। आसत्तम्हि देईए कासिराअदुहिदाए, जधा,—

( क ) अविद अविद भोः ! निमन्त्रणिकः परमान्नेनेव राजरहस्येन स्फुटता न शक्नोमि जनाकीर्णे आत्मनो जिह्वां धारयितुं, तद्यावत् स राजा धर्मासनगतो भवेत्, तावदस्मिन् विरलजनसम्पाते देवच्छन्दप्रासादे अधिरुह्य स्थास्यामि ।

किमिवेत्याह—खण्डिताग्रादिति ।—राजहंसी खण्डिताग्रात् त्रुटितमुखात् मृणालात् सूत्रमिव । पूर्वरागे हि दशधा दशा प्रोक्ता, अत्र तु सूत्रग्रहणकथनात् मनःसङ्गरूपा राज्ञो द्वितीया दशा सूचिता । तदुक्तं दर्पणे—"दृङ्मनःसङ्गसङ्कल्पाः" इति । उपजातिः वृत्तम् ।

---

(१) विदूषकलक्षणं यथा दर्पणे,—"कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः ॥" इति ।

(२) अविद अविद इति सम्भ्रमसूचकम् अव्ययम् । "सर्वमप्यौदरिकाणामभ्यवहार एव पर्य्यवस्यति" इति कारणादुदरम्भरिर्विदूषकः अभीष्टपदहृष्टान्तेन मनोभावं व्यनक्ति, निमन्त्रणिकः निमन्त्रितः स्फुटता अत्युष्णेन इत्यर्थः परमान्नेन हेतुना परमान्नभोजनलोभात् आत्मनो जिह्वां धारयितुं लालायितत्वात् यथा न शक्नोति, तथा अहमपि अन्तःस्फुटता राजरहस्येन जिह्वां धारयितुं न शक्नोमि, राजरहस्यं गोपयितुं न पारयामीत्यर्थः ।

"हञ्जे णिउणिए! जदो पहुदि भअवदो सुज्जस्स उअत्थाणं कदुअ पड़िणिउत्तो महाराओ, तदो पहुदि सुसहिअओ विअ लक्खीअदि; ता तुमंपि अज्जमाणवआदो जाणाहि से उक्कण्ठाकारणं" त्ति। ता कधं सो बम्हबंधू अब्भत्थिदव्वो? अधवा तिणलग्गं विअ ओसाअसलिलं ण तस्सिं राअरहस्सं चिरं चिट्ठिस्सदि त्ति तक्केमि; ता जाव णं असेसामि। [परिक्रम्य दृष्ट्वा]। अम्महे! आलेक्खबाणरो विअ किंपि मंतअंतो णिहुदो अज्जमाणवओ चिट्ठदि; ता जाव णं उपसप्पामि। [उपसृत्य]। अज्ज! वंदामि। (ख) (३)

विदू। सोत्थि भोदिए। [स्वगतम्]। एदं दुट्ठचेलिअं पेक्खिअ तं राअरहस्सं हिअअं भिंदिअ णिक्कमदि विअ। [किञ्चिन्मुखं संवृत्य प्रकाशम्]। भोदि णिउणिए! सङ्गीदवावारं उज्झिअ कहिं पउत्तासि?। (ग) (४)

---

(ख) आज्ञप्ताऽस्मि देव्या काशीराजदुहित्रा, यथा,—"अयि निपुणिके! यतः प्रभृति भगवतः सूर्य्यस्य उपस्थानं कृत्वा प्रतिनिवृत्तो महाराजः, ततः प्रभृति शून्यहृदय इव लक्ष्यते, तस्मात् त्वमपि आर्य्यमाणवकात् जानीहि तस्य उत्कण्ठाकारणम्" इति। तत् कथं स ब्रह्मबन्धुरभ्यर्थितव्यः? अथवा तृणलग्नमिव अवश्यायसलिलं न तस्मिन् राजरहस्यं चिरं स्थास्यतीति तर्कयामि। तद्यावदेनमन्विष्यामि। अहो! आलेख्यवानर इव किमपि मन्त्रयन् निभृत आर्य्यमाणवकस्तिष्ठति, तद्यावदेनमुपसर्पामि। आर्य्य! वन्दे।

(ग) स्वस्ति भवत्यै। एनां दुष्टचेटिकां प्रेक्ष्य तद्राजरहस्यं हृदयं भित्त्वा निष्क्रामतीव। भवति निपुणिके! सङ्गीतव्यापारमुज्झित्वा कुत्र प्रवृत्ताऽसि?।

---

(३) आर्य्यमाणवकादिति।—माणवक इति विदूषकस्य नाम। ब्रह्मबन्धुः कुत्सितब्राह्मणः। अभ्यर्थितव्यः किंरूपया अभ्यर्थनया तस्माद्राजरहस्यं ज्ञातव्यमित्यर्थः। अवश्यायसलिलं शिशिरजलम्।

(४) कुत्र प्रवृत्ताऽसि नियुक्ताऽसि? किमर्थं कुत्र गच्छसीत्यर्थः।

चेटी। देईए वअणेण अज्जं ज्जेव पेक्खिदुं। (घ)

विदू। किं तत्थभोदी आसवेदि ?। (ङ)

चेटी। देई भणादि, जधा, अज्जस्स मम उअरि अदक्खिस्सं, ण मं अणुभूअवेअणं दुक्खिदं अवलोअदि त्ति। (च) (५)

विदू। णिउणिए! किं पिअवअस्सेण पड़िऊलं किंपि समाचरिदं ?। (छ)

चेटी। जं णिमित्तं उण भट्टा उक्कण्ठदी, ताए इत्थिआए णामेण भट्टिणा देई आलविदा। (ज) (६)

विदू। [स्वगतम्]। कधं सअंज्जेव तत्थभअदा वअस्सेण रहस्सभेओ किदो, किं दाणिं अहं वम्हणो जीहां रक्खिदुं समत्थोम्हि ? [प्रकाशम्]। आं, तत्थभोदी उव्वसि त्ति अच्छरा, ताए दंसणेण उम्मादिदो ण केवलं तं आआसेदि, मंपि वम्हणं असिदव्वविमुहं दिढ़ं पीलेदि। (झ)

---

(घ) देव्या वचनेन आर्य्यमेव प्रेक्षितुम्।

(ङ) किं तत्रभवती आज्ञापयति ?।

(च) देवी भणति, यथा, आर्य्यस्य ममोपरि अदाक्षिण्यं, न मामनुभूतवेदनां दुःखितामवलोकयतीति।

(छ) निपुणिके! किं प्रियवयस्येन प्रतिकूलं किमपि समाचरितम् ?।

(ज) यन्निमित्तं पुनर्भर्त्ता उत्कण्ठितः तस्याः स्त्रिया नाम्ना भर्त्ता देवी आलपिता।

(झ) कथं स्वयमेव तत्रभवता वयस्येन रहस्यभेदः कृतः, किमिदानीमहं

---

(५) अदाक्षिण्यं, परच्छन्दानुवर्त्तित्वं दाक्षिण्यं, तद्राहित्यम् अदाक्षिण्यं, मन्मनोविपरीताचारोति भावः। यतः, अनुभूतवेदनाम् अनुभूता सह्यीकृता वेदना पीड़ा यया सा; केनापि कारणेन सञ्जातां वेदनामहमनुभवामि, अत एव दुःखितां मां भवान् नावलोकयति। दुःखि दुःखानुभावो दूरमास्ताम्, अन्तर्वेदनाजनितपीड़ां मां न पश्यसीति भावः।

(६) चित्रोङ्गान्या तन्नाम्ना देवी शब्दितेत्यर्थः।

चेटी। [स्वगतम्]। उववादिदो मए भेओ भट्टिणो रहस्स-दुग्गस्स ; ता गदुअ देईए एदं णिवेदेमि। (ञ) (७)

[इति प्रस्थातुमुद्यता]।

विदू। णिउणिए! विसवेहि मम वअणेण कासिराअ-दुहिदरं, परिस्संतम्हि इमाए मिअतिह्णाए पिअवअस्सं णिअत्तावेदुं, जइ भोदीए मुहकमलं पेक्खिस्सदि तदो णिअ-त्तिस्सदि त्ति। (ट)

चेटी। जं अज्जो आणवेदि। (ठ)

[इति निष्क्रान्ता]।

वैतालिकः। [नेपथ्ये पठति]। जयति जयति देवः।—

आ लोकान्तप्रतिहततमोवृत्तिरासां प्रजानां
तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः।
तिष्ठत्येकक्षणमधिपतिर्ज्योतिषां व्योममध्ये
षष्ठे काले त्वमपि लभसे देव! विश्रान्तिमङ्कः॥ (८)

---

आक्रान्तो जिह्वां रचितुं समर्थोऽस्मि? यां, तत्भवती उर्वशीत्यप्सराः, तस्या दर्शनेन उन्मादितो न केवलं तामायासयति मामपि ब्राह्मणम् अशितव्यविमुखं दृढं पीडयति।

(ञ) उपपादितो मया भेदो भर्त्तुः रहस्यदुर्गस्य, तद्गत्वा देव्यै एतत् निवेदयामि।

(ट) निपुणिके! विज्ञापय मम वचनेन काशीराजदुहितरं, परिश्रान्तोऽस्मि अस्या मृगतृष्णायाः प्रियवयस्यं निवर्त्तयितुं, यदि भवत्या मुखकमलं प्रेक्षिष्यते तदा निवर्त्तिष्यते इति।

(ठ) यदार्य्य आज्ञापयति।

---

(७) भर्त्तुः रहस्यदुर्गस्य भेदः उपपादितः, दुर्भेद्यस्य गोप्यस्य उद्भेदनं कृतमित्यर्थः।

(८) आ लोकान्तं भुवनान्तपर्य्यन्तं प्रतिहता निराकृता तमसः अन्धकारस्य वृत्तिर्व्यापारो येन सूर्य्येण। रवेरुदयमात्रेण निरस्ततमो जगत् जातमिति भावः। राज-पक्षे,—आलोकान्तात् दर्शनमात्रात्, (अत्र तु अन्तशब्दो निश्चयवाची, "अन्तः स्वरूपे

विदू। [कर्णं दत्त्वा]। एसो उण पिअवअस्सो धम्मासणादो समुट्ठिदो इधज्जेव आअच्छदि, ता जाव पासपरिवत्ती होमि। (ड)

[इति निष्क्रान्तः]।

[प्रवेशकः]। (९)

[ततः प्रविशति उत्कण्ठितो राजा विदूषकश्च]।

राजा।—

आ दर्शनात् प्रविष्टा सा मे सुरलोकसुन्दरी हृदयम्।
बाणेन मकरकेतोः क्षतमार्गमवन्ध्यपातेन॥ (१०)

विदू। सपीड़ा क्खु जादा तत्थभोदी कासिराअदुहिदा। (ढ)

राजा। [निरीक्ष्य]। रक्ष्यते भवता रहस्यनिक्षेपः?।

---

(ड) एष पुनः प्रियवयस्यो धर्मासनात् समुत्थित इहैवागच्छति, तद्यावत् पार्श्वपरिवर्त्ती भवामि।

(ढ) सपीड़ा खलु जाता तत्रभवती काशीराजदुहिता।

---

निकटे प्रान्ते निश्चयनाशयोः" इति हेमचन्द्रः) प्रतिहता निरस्ता तमसो ग्लानेर्वृत्तिर्व्यापारो येन, तमस्तु ज्ञानवैपरीत्यं, तदत्र ग्लानिरित्यनुमीयते,न तु अज्ञानं, राजदर्शनमात्रेणाज्ञाननाशस्यासम्भवात्। आसां प्रजानां सम्बन्धे तव सवितुश्च तुल्योद्योगः सदृशारम्भः; सदृशकार्य्यकारिणौ उभौ इत्यर्थः। तथा ज्योतिषां ग्रहनक्षत्राणामधिपतिः सूर्य्यः व्योममध्ये एकक्षणं तिष्ठति, मध्याह्नक्षणं विश्रान्तिसमयः सूर्य्यस्य। हे देव! त्वमपि अह्नो दिवसस्य षष्ठे काले षड्भागे विश्रान्तिं लभसे। मन्दाक्रान्ता वृत्तम्।

(९) प्रवेशकलक्षणं यथा दर्पणे—"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥" इति।

(१०) सा सुरलोकसुन्दरी उर्वशी आ दर्शनात् दर्शनावधि दर्शनमात्रमेव इत्यर्थः अवन्ध्यपातेन सार्थकपतनेन मकरकेतोः कन्दर्पस्य बाणेन क्षतमार्गं क्षतद्वारं मे मम हृदयं प्रविष्टा। आर्य्या वृत्तम्।

विदू। [आत्मगतम्]। वञ्चिदम्हि दासीए धीआए णिउणिआए, अस्सधा कधं विअ संपुच्छदि वअस्सो ?। (ण)

राजा। किं भवान् तूष्णीमास्ते ?।

विदू। भो! एव्वं मए जीहा संजंतिदा, जेण भवदो वि णत्थि पड़िवअणं। (त)

राजा। युक्तम्; अथ केन इदानीमात्मानं विनोदयामि ?।

विदू। भो! महाणसं (११) गच्छम्ह। (थ)

राजा। किं तत्र ?।

विदू। तहिं पञ्चविहस्स अब्भवहारस्स उत्तमस्ससंभारस्स भोअणं, मोअअसक्करपप्पूलेहिं उक्कण्ठं विणोदेदु। (द) (१२)

राजा। तत्र ईप्सितरससन्निधानाद्भवता रंस्यते; मया पुनः कथमसुलभप्रार्थयितव्य आत्मा विनोदयितव्यः ?।

विदू। णं भवंपि तत्थभोदीए उव्वसीए दंसणपधं गदो ?। (ध)

(ण) वञ्चितोऽस्मि दास्याः दुहित्रा निपुणिकया, अन्यथा कथमिव संपृच्छति वयस्यः ?।

(त) भोः! एवं मया जिह्वा संयन्त्रिता, येन भवतोऽपि नास्ति प्रतिवचनम्।

(थ) भोः! महानसं गच्छामः।

(द) तत्र पञ्चविधस्य अभ्यवहारस्य उत्तमान्नसम्भारस्य भोजनं, मोदकशर्करापर्पटैः उत्कण्ठां विनोदयतु।

(ध) ननु भवानपि तत्रभवत्या उर्वश्या दर्शनपथं गतः ?।

(११) महानसं पाकशालाम्।

(१२) अभ्यवहारस्य भोज्यस्य। पर्पटः पिष्टकविशेषः (पाँपर इति भाषा) "पर्पटास्ते सदाङ्गारभ्रष्टाः परमरोचकाः। दीपनाः पाचका रूक्षा गुरवः किञ्चिदीरिताः॥ मौद्गाश्च तद्गुणाः प्रोक्ता विशेषाल्लघवो हिताः। चणकस्य गुणैर्युक्ताः पर्पटाश्चणकोद्भवाः॥ स्नेहे भृष्टास्तु ते सर्वे भवेयुर्मध्यमा गुणैः॥" इति भावप्रकाशः।

राजा। ततः किम्?।

विदू। ण क्खु दे दुल्लह त्ति तक्केमि। (न)

राजा। पक्षपातोऽपि तस्याः रूपस्यालौकिक एव। (१३)

विदू। एव्वं! वट्टदि कोदूहलं, किं दाव तत्थभोदीए उव्वसीए रूएण अहं ज्जेव दुदिओ णिरूपिदो?। (प) (१४)

राजा। प्रत्यवयववर्णना तु न क्षता मया, तेन हि श्रूयतां समासतः। (१५)

विदू। भो! अवहिदोम्हि। (फ)

राजा। वयस्य!—

आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः।
उपमानस्यापि सखे! प्रत्युपमानं वपुस्तस्याः॥ (१६)

---

(न) न खलु ते दुर्लभेति तर्कयामि।

(प) एवं! वर्त्तते कौतूहलं, किं तावत् तत्रभवत्या उर्वश्या रूपेण अहमेव द्वितीयो निरूपितः?।

(फ) भोः! अवहितोऽस्मि।

---

(१३) त्वमपि समधिकरूपवान्, त्वद्दर्शनेन सा समुत्सुका स्वयमेव त्वां वृणुते इति विदूषकस्याभिप्रायं ज्ञात्वा राजाह,—वयस्य! किं बहुना "पक्षपातोऽपि तस्या रूपस्यालौकिक एव।" अलौकिकः साधारणज्ञानैरननुमेय इतरजनज्ञानविषयाद्बहिरवस्थित इत्यर्थः। मादृशा हि साधारणाः, अत एव तद्रूपपक्षपातित्वेऽपि नास्माकमधिकारः, कथमस्मदीयं रूपं तद्रूपाहरणे प्रभवति? सर्वमप्येतत् व्यर्थम्। अन्यत् सर्वं विमुच्य हृदयेन तत्पक्षावलम्बनं पक्षपातः।

(१४) एवं! कौतूहलं वर्त्तते, दर्शनायेति शेषः। वयस्य! कथमुर्वश्या रूपेण अहं द्वितीयो निरूपितः? अहं यादृग्रूपवान्, कथमुर्वशी तादृग्रूपवती? रूपसादृश्यमावयोः साम्यं किम्?।

(१५) प्रत्यवयववर्णना प्रत्यङ्गवर्णना। समासतः संक्षेपेण।

(१६) शोभाप्रदम् आभरणं तदङ्गविन्यस्तं सत् स्वयमेव शोभते न तु शोभयति; तदाह, तस्या वपुः आभरणस्याभरणम्, आभरणस्थानं प्रत्येकं इत्य

विदू। इदं दाव मिअतिसारसाहिलासिणा चँदएण बिअ दिव्वरसाहिलासिणा भअदा चारुरूअत्तणं परिग्गहिदं। (ब) (१७)

राजा। विविधशिशिरोपचारान्नान्यत् शरणमस्ति, (१८) तद्भवान् प्रमदवनमार्गमादेशयतु।

विदू। [स्वगतम्]। का गदी ? [प्रकाशम्]। इदो इदो भवं। [इति परिक्रामतः]। एसो पमदवणपरिसरो अणालविदोवि पत्तुवगदो (१९) आअंतुणा दक्खिणमारुएण। (भ)

राजा। उपपन्नं विशेषणमस्य वायोः, अयं हि,—

---

(ब) इदं तावन्मृगतृष्णारसाभिलाषिणा चन्द्रेणेव दिव्यरसाभिलाषिणा भवता चारुरूपत्वं परिगृहीतम्।

(भ) का गतिः ? इत इतो भवान्। एष प्रमदवनपरिसरोऽनालपितोऽपि प्रत्युपगत आगन्तुना दक्षिणमारुतेन।

---

पदादिकमपि ईदृशं मनोहारि, यत् किमपि अलङ्करणं तदलङ्करणे नालं, परन्तु तदङ्गपरिहितत्वादलङ्करणानि एव अलङ्क्रियन्ते इति भावः। कान्तिप्रदं प्रसाधनं वेशविन्यासादिकमपि तद्वत्। सर्वाङ्गन्तु किमिव मनोहारि, तन्न जाने ; जगति न किमपीदृशञ्च पश्यामि, येन तदङ्गमुपमीयते, तदेव जगति मनोहरवस्तूनामुपमानम्। आर्य्या छन्दः।

(१७) सागरजलाकर्षणाभिलाषी चन्द्रमा जलभ्रमात् मृगतृष्णिकायां जलाकृष्टमना यथा विफलकामो भवति, चन्द्राकर्षणतः सागरेषु जलवृद्धिर्भवति, ["चन्द्रोदयारम्भ इवाम्बुराशिः" उच्छलतीति शेषः।] तद्वच्चन्द्रवपुस्त्वमपि दुष्प्राप्यदिव्यरसाभिलाषी सन् विफलकामो भविष्यसि। चारुरूपत्वं परिगृहीतमर्थात् वृथाचिन्तया आकृतिस्ते पाण्डुवर्णा सैव मधुरा। मृगतृष्णिकानां रात्रावसम्भवात् दिवासमुदितचन्द्रवत् पाण्डुभावमापन्न इत्यर्थः।

(१८) विविधशिशिरोपचारात् नानाविधशीतलद्रव्यसेवनात् अन्यत् अपरं शरणं नास्ति ; दुर्लभत्वादेव मदङ्गं नितरां दह्यति।

(१९) प्रमदवनपरिसरः प्रमदवनस्य परिसरः सीमा, प्रान्तदेश इत्यर्थः। प्रत्युपगतः प्राप्तः।

निषिञ्चन् माधवीं लक्ष्मीं लतां कौन्दीञ्च लासयन्।
स्नेहदाक्षिण्ययोर्योगात् कामीव प्रतिभाति मे॥ (२०)

विदू। ईदिसो ज्जेव अहिणिवेसो भोदु। [इति परिक्रामन्]। इदं पमदवणं, पविसदु भवं। (म)

राजा। वयस्य! प्रविश अग्रतः।

उभौ। [प्रवेशं नाटयतः]।

राजा। [त्रासं रूपयित्वा]। वयस्य! साधु मनसा समर्थितः; आपत्प्रतीकारः किल मम उद्यानप्रवेशः, तच्च अन्यथैव उपपन्नम्।—

विविक्षोर्यदिदं नूनमुद्यानं नाद्य शान्तये।
स्रोतसेवोह्यमानस्य प्रतीपतरणं महत्॥ (२१)

विदू। कधं विअ?। (य)

राजा।—

इदमसुलभवस्तुप्रार्थनादुर्निवारं
प्रथममपि मनो मे पञ्चबाणः क्षिणोति।

---

(म) ईदृश एवाभिनिवेशो भवतु। इदं प्रमदवनं, प्रविशतु भवान्।

(य) कथमिव?।

---

(२०) माधवीं लक्ष्मीं निषिञ्चन् वसन्तशोभां वर्द्धयन्। पक्षान्तरे—एकया नायिकया सङ्गच्छमानः, लतां कौन्दीञ्च लासयन् पुष्पादिना विकासयन्, अन्यत्र—हास्यकौतुकादिना अन्याञ्च उल्लासयन्। स्नेहदाक्षिण्ययोर्योगात्, वायुपक्षे—स्नेहस्य शैत्योपयोगिनो जलतुषारशीकरादिकस्य तथा दाक्षिण्यस्य दक्षिणदिग्वर्त्तित्वस्य तयोः योगात्। पक्षान्तरे—स्नेहः आसक्तिस्तथा दाक्षिण्यम् अनुकूलता तयोर्योगः, सर्वत्र समस्नेहदाक्षिण्यसम्पन्न इत्यर्थः। कामिन एव कामोपभोगार्थं सर्वनायिकासु समदृष्टयो भवन्ति, न तु प्रणयिन इति कामिशब्दतात्पर्य्यम्। अनुष्टुप् छन्दः।

(२१) विविक्षोः प्रवेष्टुमिच्छोः, ममेति शेषः। इदं माधवीलक्ष्मीसन्दर्शनम्। उह्यमानस्य नीयमानस्य। प्रतीपतरणं प्रतिकूलसन्तरणं, प्रतिकूलस्रोतसा सन्तरणं यथा दुःखावहं तथा मम उद्यानप्रवेशोऽपि इति निष्कर्षः।

किमुत मलयवातोन्मूलितापाण्डुपत्रै-
रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु ? ॥ ( २२ )

विदू। अलं भवदो परिदेविदेण, अइरेण इच्छिदसंपादओ अणंगो ज्जेव दे सहाओ हुविस्सदि त्ति। ( र )

राजा। प्रतिगृहीतं ब्राह्मणवचनम् ।

[ इति परिक्रामतः ] ।

विदू। पेक्खदु पेक्खदु भवं वसंतावदारसूअअस्स अहिरामत्तणं ( २३ ) पमदवणस्स। ( ल )

राजा। ननु ! प्रतिपदमेव तावदवलोकयामि । अत्र हि ।—

अग्रे स्त्रीनखपाटलं कुरुवकं श्यामं द्वयोर्भागयो-
र्बालाशोकमुपोढ़रागसुभगं भेदोन्मुखं तिष्ठति ।
ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे ! मध्ये मधुश्रीः स्थिता ॥ (२४)

---

( र ) अलं भवतः परिदेवितेन, अचिरेण इष्टसम्पादकोऽनङ्ग एव ते सहायो भविष्यतीति ।

( ल ) प्रेचतां प्रेचतां भवान् वसन्तावतारसूचकस्य अभिरामत्वं प्रमदवनस्य ।

---

( २२ ) पञ्चवाणः प्रथममपि उद्यानप्रवेशात् पूर्वमपि असुलभवस्तुप्रार्थनासु दुष्प्राप्योर्वशीलाभरूपाभिलाषेषु दुर्निवारं निवारयितुमशक्यं मे मनः चिणोति दुनोति । इदानीन्तु दचिणपवनापसारितपाण्डुपत्रैर्नवोद्भिन्नप्रवालोपलचितैः इत्यर्थः, उद्यान-सहकारैर्दर्शितेषु कन्दर्पनयनपथपातितेषु अङ्कुरेषु सत्सु किमुत ? कामस्तु निःसहाय एव एवं क्लेशप्रदायी, सहायवान् पुनः किं न करोति ? अत एव सीतोवेगं परिहर्त्तुमनसः प्रतीपतरणमिव शान्त्यर्थमुद्यानप्रवेशो मे विशिष्टक्लेशदायी जातः । वसन्ताभरणभूतचूताङ्कुरदर्शनादिना मनो मे द्विगुणं ज्वलतीति भावः । मालिनी छन्दः ।

( २३ ) वसन्तस्य अवतारः आविर्भावः तस्य सूचकः द्योतकः । अभिरामत्वं मनोहरत्वम् ।

( २४ ) हे सखे ! मधुश्रीः मुग्धत्वस्य यौवनस्य च मध्ये स्थिता नातिव्यक्ता

विदू। भो! एसो कसणमणिसिलावट्टसणाहो (२५) माहवीलदामंडओ भमरसंघ-पअविहड़िदेहिं कुसुमेहिं किदोवआरो विअ अत्तभवदो वट्टदि ; ता अणुग्गहीअदु एसो। (व)

राजा। यदभिरोचते भवते।

[ इति उपविशतः ]।

विदू। ता दाणिं इहासीणो ललिदलदालोहमाणलोअणो उव्वसीगदं उक्कंठं विणोदेदु भवं। (श)

(व) भोः! एष कषणमणिशिलापट्टसनाथो माधवीलतामण्डपो भमरसङ्घपद-विघट्टितैः कुसुमैः कृतोपचार इव अत्रभवतो वर्त्तते ; तदनुगृह्यतामेषः।

(श) तदिदानीमिहासीनो ललितलतालोभमानलोचन उर्वशीगतामुत्कण्ठां विनोदयतु भवान्।

नापि अव्यक्ता इति भावः। कथम्? अग्रे इत्यादिना तद्विवृणोति। अग्रे समन्तं, स्त्रीनखपाटलं. पाटलं पुष्पं स्त्रीनखसदृशमग्रे दृश्यते, कुरुवकं द्वयोर्भागयोः श्यामं, तदाकारस्वरूपवर्णनमेतत्। बालाशोकम् अनुद्भिन्नत्वात् उपोढ़रागसुभगं सञ्जात-लोहित्यात् सुन्दरं सत् भेदोन्मुखं तिष्ठति, चूते आम्रवृक्षे नवा मञ्जरी ईषद्बद्धरजःकणया अल्पसञ्जातपरागलेशेन अग्रकपिशा अग्रभागपांशुला। इत्यादिभिः कारणैः मधुश्रियो वसन्तलक्ष्म्या नातिव्यक्तिर्नापि अव्यक्तिर्व्यज्यते। मौग्ध्ययौवनान्तर्गतस्त्रीपक्षे तु,— अग्रे प्रथमं स्त्रीनखपाटलं यौवनारम्भे स्त्रीनखान्येव पाटलानि भवन्ति। कुरुवकं बालास्तनवत्, बालास्तनयोः कुरुवकाकारत्वादेव कुरुवकेणैव बालास्तनत्वमवगम्यते। कुरुवकस्य अर्थात् कुचयुगस्य भागद्वयं चुचुकद्वयस्याग्रभाग इति यावत्, श्यामम। बालाशोकम् उपोढ़रागसुभगम् अन्तःसञ्जातानुरागेण सुन्दरम् अत एव अशोकं प्रफुल्लाकारं यथा तथा, यौवनोद्गमे बालास्तु सदैव प्रफुल्लाकारमुद्वहन्तीति दृष्टान्तात् ; भेदोन्मुखं विकाशोन्मुखं तिष्ठति। पुनः किम्भूता? ईषद्बद्धरजःकणा, स्पष्टार्थम्। चूते नवा नवोद्गता मञ्जरी अग्रकपिशा अग्रभागकपिशा। "चूते मञ्जरी" पद-द्वयमश्लीलत्वात् न व्याख्यातम्। हारावल्यां चूतशब्दार्थदर्शनादेव अर्थव्यक्तिर्भविष्यति। शार्दूलविक्रीड़ितं छन्दः।

(२५) यत्र उद्दृष्य सुवर्णस्य विशुद्धिः परिज्ञायते सा शिला निकषपाषाणादि-नाम्ना प्रसिद्धा। ( कष्टिपाथर इति वङ्गभाषा )।

राजा। [निश्वस्य] ।—

बहुकुसुमितास्वपि सखे! नोपवनलतासु रम्यविटपासु।
चक्षुर्बध्नाति धृतिं तदङ्गनालोकदुर्ललितम्॥ (२६)

तदुपायश्चिन्त्यतां यथा सफलप्रार्थनो भवेयम्।

विदू। [विहस्य]। भो भो! अहल्लाकामुअस्स इंदस्स बज्जो सचिवो, उव्वसीपज्जुस्सुअस्स भवदोवि अहं, दुवे वि एत्थ उम्मत्तआ। (ष) (२७)

राजा। न खलु चिन्तयति भवान्?।

विदू। [चिन्तयति]। एस चिंतेमि; मा उण परिदेविदेहिं समाधिं भंजिस्ससि। [निमित्तं सूचयित्वा आत्मगतम्]। अहो! अहं कज्जदंसी। (स)

राजा।—

असुलभा सकलेन्दुमुखी च सा
किमपि चेदमनङ्गविचेष्टितम्।

---

(ष) भोः! भोः! अहल्याकामुकस्य इन्द्रस्य वज्रं सचिवः, उर्वशीपर्य्युत्सुकस्य भवतोऽपि अहं, द्वावप्यत्र उन्मत्तौ।

(स) एष चिन्तयामि, मा पुनः परिदेवितैः समाधिं भङ्क्षसि। अहो! अहं कार्य्यदर्शी।

---

(२६) तस्या अङ्गनायाः उर्वश्याः आलोकेन दर्शनेन दुर्ललितमस्थिरं तद्दर्शनेन मे प्रतिहतमक्षि इदानीं केष्वपि धृतिं न बध्नाति। आर्य्या छन्दः।

(२७) अहल्याकामुक इन्द्रोऽहल्याप्राप्तिविषये यदि वज्रमयोजयिष्यत्, तदा तस्य यथा कार्य्यसिद्धिसम्भावना, तथाव मन्नियोगेन कार्य्यसिद्धिस्ते भविष्यति। द्वावप्यावामत्र उन्मत्तौ एतत्कार्य्यज्ञानहीनौ। वज्रं हि शत्रुदलने क्षमम् अहमप्यन्यत्र, काऽऽवयोः क्षमता एतच्चिन्तने? अत्र नियोगे तु उन्मत्तवत् कार्य्यविध्वंसिनौ भवेव इति भावः।

(२८) सकलेन्दुमुखी पूर्णचन्द्रनिभानना सा उर्वशी असुलभा नितरां दुष्प्राप्या, किमपि च मयि इदमनङ्गविचेष्टितम् अनङ्गविक्रीडितं, तथापि

अभिमुखीष्विव वाञ्छितसिद्धिषु
व्रजति निर्वृतिमेकपदे मनः ॥ (२८)

[ इति मदनोत्सुकस्तिष्ठति ]।

[ ततः प्रविशति आकाशयानेन उर्वशी चित्रलेखा च ]।

चित्र। सहि उव्वसि! कहिं क्खु अणिद्दिट्ठकारणं गच्छीअदि ?। (ङ)

उर्व। [ मदनवेदनामभिनीय सलज्जम् ]। सहि! हेमकूड़सिहरे लदाविड़वे लग्गं वैजअंतिअं मोआवेहि त्ति मए भणिदा, तुए उण उअहसिअ भणिदाम्हि, दिढ़ं क्खु लग्गा, ण सक्का मोआविदुं; दाणिं पुच्छसि, कहिं अणिद्दिट्ठकारणं गच्छीअदि ?। (च)

चित्र। किं णु क्खु तस्स राएसिणो पुरूरवस्स सआसं पत्थिदासि ?। (क)

उर्व। एसो सो अगणिदलज्जो ववसाओ। (ख) (२९)

चित्र। को उण सहीए पढ़मं तहिं पेसिदो ?। (ग)

उर्व। णं हिअओ। (घ)

---

(ङ) सखि उर्वशि! कुत्र खलु अनिर्दिष्टकारणं गम्यते ?।

(च) सखि! हेमकूटशिखरे लताविटपे लग्नां वैजयन्तिकां मोचयेति मया भणिता, त्वया पुनरुपहस्य भणिताऽस्मि, दृढ़ं खलु लग्ना न शक्ता मोचयितुम्; इदानीं पृच्छसि कुत्र अनिर्दिष्टकारणं गम्यते ?।

(क) किं नु खलु तस्य राजर्षेः पुरूरवसः सकाशं प्रस्थिताऽसि ?।

(ख) एष सोऽगणितलज्जो व्यवसायः।

(ग) कः पुनः सख्या प्रथमं तत्र प्रेषितः ?।

(घ) ननु हृदयम्।

---

अभिमुखीषु वाञ्छितसिद्धिषु सम्पन्नोन्मुखीषु इष्टसिद्धिषु यथा मनस्तुष्टिर्जायते तद्वत् ममापि अत्र मनः एकपदे संशयराहित्येन निर्वृतिं सन्तोषमेति। द्रुतविलम्बितं छन्दः।

(२९) विना प्रार्थनया कामिनीनामभिसारो लज्जाराहित्यद्योतक इति भावः।

चित्र। तधाबि संपधारीअदु दाव। (ङ) (३०)

उर्व। मअणो क्खु णिओएदि मं, कुदो संपधारणा ?।
(च) (३१)

चित्र। अदो अवरं णत्थि मे उत्तरं। (छ)

उर्व। तेण आदिसदु मे पिअसही मग्गं, जेण तहिं गच्छंतीए ण अंतराओ भवे। (ज)

चित्र। सहि! वीसत्था होहि; णं भअवदा देअगुरुणा अवराइदं णाम सिहाबंधणीं बिज्जं उअदिसंतेण तिदसप्पलिपक्खस्स अलंघणीआ कदम्ह। (झ) (३२)

उर्व। [सलज्जम्]। ताए पओअं सव्वं सुमरेसि ?। (ञ)

चित्र। हिअओ एदं सव्वं जाणादि। (ट) (३३)

---

(ङ) तथापि सम्प्रधार्य्यतां तावत्।

(च) मदनः खलु नियोजयति मां, कुतः सम्प्रधारणा ?।

(छ) अतोऽपरं नास्ति मे उत्तरम्।

(ज) तेन आदिशतु मे प्रियसखी मार्गं, येन तत्र गच्छन्त्या न अन्तरायो भवेत्।

(झ) सखि! विश्वस्ता भव; ननु भगवता देवगुरुणा अपराजितां नाम शिखाबन्धनीं विद्यामुपदिशता त्रिदशप्रतिपक्षस्य अलङ्घनीये क्रते स्वः।

(ञ) तस्याः प्रयोगं सर्वं स्मरसि ?।

(ट) हृदयमेतत् सर्वं जानाति।

---

(३०) सम्प्रधार्य्यताम् आक्रष्य स्वपदे स्थाप्यताम्।

(३१) मदननियोगे मत्प्रभुत्वस्यासम्भाव्यात्।

(३२) साम्प्रतिकापद्विमुक्तेः पुरूरवसा तद्दैत्यहस्तादस्माकमुद्धारात् परतरं हि बृहस्पतिना अपराजिता नाम या शिखाबन्धनी विद्या नो दत्ता, तत्प्रभावेण असुराः पुनरस्मासु अपराद्धुमशक्ताः। शिखाबन्धनी बृहस्पतिदत्तमन्त्रोच्चारणेन केशांशबन्धनरूपा।

(३३) असुरावलेपात् क्लेशितेषु हृदयेषु तन्निखातमिवास्ते।

उर्व। सहि! हिअअं एदं सव्वं जाणादि ज्जेव; मम उण तधावि अदिभएण अणिच्चओ। (ठ) (३४)

उभे। [भ्रमण रूपयतः]।

चित्र। सहि! पेक्ख पेक्ख, एदं भअवदोए भाईरहीए जउणासंगमपावणेसुं सलिलेसुं पुस्सेसुं अवलोअंतस्स विअ अत्ताणअं पइट्ठाणस्स सिहाभरणभूदं विअ तस्स राएसिणो भवणं उवगदम्ह। (ड) (३५)

उर्व। [सस्पृहमवलोक्य]। णं वोत्तव्वं ठाणांतरगदो सग्गो त्ति। हला! कहिं सो आवस्साणुकंपी भवे?। (ढ) (३६)

चित्र। एदस्सिं णंदणवणेक्कप्पदेसे (३७) विअ पमदवणे ओदरिअ जाणिस्सामो। (ण)

---

(ठ) सखि! हृदयमेतत् सर्वं जानात्येव; मम पुनस्तथापि अतिभयेन अनिश्चयः।

(ड) सखि! पश्य पश्य, इदं भगवत्या भागीरथ्या यमुनासङ्गमपावनेषु सलिलेषु पुण्येषु अवलोकयत इवात्मानं प्रतिष्ठानस्य शिखाभरणभूतमिव तस्य राजर्षेर्भवनमुपगते स्वः।

(ढ) ननु वक्तव्यं स्थानान्तरगतः स्वर्ग इति। अयि! क्व स आपन्नानुकम्पी भवेत्?।

(ण) एतस्मिन् नन्दनवनैकप्रदेशे इव प्रमदवने अवतीर्य ज्ञास्यामः।

---

(३४) सत्यं, किन्तु पूर्वभयसङ्कटनपर्य्यन्तं मेऽतिभयं समजनि। तत एव मे संशयः, मन्ममेतत हृदयं सम्यक् स्मरति न वा संशयः।

(३५) पुण्येषु यमुनासङ्गमपावनेषु सलिलेषु आत्मानम् अवलोकयतः इव प्रतिष्ठानस्य तन्नामकस्य पुरूरवसो नगरस्य। सलिलानां प्रतिबिम्बग्रहणसामर्थ्यात् आत्मावलोकनम्। राज्ञो धर्मदर्शित्वात् पुरी विगतपापा, अत एव नामतः सलिलेषु वस्तुतस्तु पुण्यस्रोतःसु प्रतिबिम्बितम् आत्मानमवलोकयन्तीव स्थिता इति भावः।

(३६) आपन्नानुकम्पित्वेन पूर्वावस्थास्मरणं, तेन च मनस्तुष्टिः। प्रणयिन्यो हि अभीष्टनायकस्य गुणभागमेव पश्यन्ति। अथवा राजा आपन्नां माम् अद्य अनुकम्पत एव, यतः स आपन्नानुकम्पी।

उभे। [अवतरतः]।

चित्र। [राजानं दृष्ट्वा सहर्षम्]। सहि! एसो पढ़मोदिदो विअ भअवं चंदो कोमुदिं (३८) अविक्खदि तुमं। (त)

उर्व। [विलोक्य]। हला! दाणिं पढ़मदंसणादोवि सविसेसपिअदंसणो मे महाराओ पड़िभादि। (थ)

चित्र। जुज्जदि; ता एहि, उवसप्पम्ह। (द)

उर्व। ण दाव उवसप्पिस्सं, तिरक्करिणीपच्छुसा (३९) पासपलिवत्तिणी भविअ सुणिस्सं दाव पासपलिवत्तिणा वअस्सेण सह विजणे किं मंतअंतो चिट्ठदि। (ध)

चित्र। जधा दे रोअदि। (न)

उभे। [यथोक्तमनुतिष्ठतः]।

विदू। भो! चिंतिदो मए दुल्लहपणइजणस्स समागमोवाओ। (प)

राजा। [तूष्णीमास्ते]।

---

(त) सखि! एष प्रथमोदित इव भगवान् चन्द्रः कौमुदीमपेक्षते त्वाम्।

(थ) अयि! इदानीं प्रथमदर्शनतोऽपि सविशेषप्रियदर्शनो मे महाराजः प्रतिभाति।

(द) युज्यते; तदेहि उपसर्पावः।

(ध) न तावदुपसर्पामि, तिरस्करिण्या प्रच्छन्ना पार्श्वपरिवर्त्तिनी भूत्वा श्रोष्यामि तावत् पार्श्वपरिवर्त्तिना वयस्येन सह विजने किं मन्त्रयंस्तिष्ठति।

(न) यथा ते रोचते।

(प) भोः! चिन्तितो मया दुर्लभप्रणयिजनस्य समागमोपायः।

---

(३७) इन्द्रस्य उपवनं नन्दनम्। "वनं तथा चैत्ररथं प्रसिद्धं तेष्वप्सरोनन्दननन्दनञ्च" इति भास्कराचार्य्यः।

(३८) कौमुदीं ज्योत्स्नाम्। "कौ मोदन्ते जना यस्यां तेनासौ कौमुदी स्मृता।"

(३९) तिरस्कर्त्तुं शीलमस्याः इति तिरस्करिणी विद्याविशेषः।

उर्व। का उण धण्णा इत्थिआ, जा इमिणा परिमुग्गिमाणा अत्ताणअं विणोदेदि ?। (फ)

चित्र। हला ! झाणस्स किं विलंबीअदि ?। (ब) (४०)

उर्व। सहि ! भीआमि क्खु सहसा पहावादो बिस्सादुं। (भ) (४१)

विदू। भो ! णं भणामि चिंतिदो मए दुल्लहपणइजण-समागमोबाओ। (म)

राजा। वयस्य ! कथ्यताम्।

विदू। सिविणसमागमकारिणं णिद्दं सेवदु भवं ; अधवा तत्थभोदीए उव्वसीए पड़िकिदिं चित्तफलए अहिलिहिअ आलोअंतो अत्ताणअं विणोदेदु। (य)

उर्व। हिअअ ! समस्सस। (र)

राजा। तदुभयमपि अनुपपन्नं, पश्य।—

हृदयमिषुभिः कामस्यान्तः सशल्यमिदं ततः
कथमुपलभे निद्रां स्वप्ने समागमकारिणीम्।
न च सुवदनामालेख्येऽपि प्रियां समवाप्य तां
मम नयनयोरुद्बाष्पत्वं सखे ! न भविष्यति ?॥ (४२)

---

(फ) का पुनर्धन्या स्त्री, या अनेन परिमृग्यमाणा आत्मानं विनोदयति ?।

(ब) अयि ! ध्यानाय किं विलम्ब्यते ?।

(भ) सखि ! बिभेमि खलु सहसा प्रभावादिज्ञातुम्।

(म) भोः ! ननु भणामि, चिन्तितो मया दुर्लभप्रणयिजनसमागमोपायः।

(य) स्वप्नसमागमकारिणीं निद्रां सेवतां भवान् ; अथवा तत्रभवत्या उर्वश्याः प्रतिकृतिं चित्रफलकेऽभिलिख्य आलोकयन्नात्मानं विनोदयतु।

(र) हृदय ! समाश्वसिहि।

---

(४०) ध्यानेन सर्वं यत् प्रत्यक्षवत् भाति, तदा ध्यानार्थं कथं विलम्ब्यते ?।

(४१) यदि नाहमेतद्ध्यानीया भवेयं, तदा मे किं भवेत् ? सहसा प्रभाव-परिज्ञाने इत्येव भयहेतुः।

चित्र। सहि! सुदं तुए वत्र्प्रणं?। (ल)

उर्व। सुदं, ण उण पज्जत्तं हिअअस्स। (व) (४३)

विदू। एत्तिको मे मदिविहवो। (श)

राजा। [निश्वस्य]।—

नितान्तकठिनां रुजं मम न वेद यो मानसीं
प्रभावविदितानुरागमवमन्यते वाऽपि माम्।
अबद्धफलनीरसं प्रतिनिधाय तस्मिन् जने
समागममनोरथं भवतु पञ्चबाणः कृती॥ (४४)

उर्व। [सखीमवलोक्य]। हद्धी! हद्धी! मंपि एव्वं अव-गच्छदि महाराओ; अहं उण असमत्थम्हि अग्गदो भविअ अत्ताणअं दंसइदुं, ता पहावणिम्मिदेण भुज्जवत्तेण लेहं संपादिअ अंतरा से खिविदुमिच्छामि। (ष)

(ल) सखि! श्रुतं त्वया वचनम्?।

(व) श्रुतं, न पुनः पर्य्याप्तं हृदयस्य।

(श) एतावान् मे मतिविभवः।

(ष) हा धिक्! हा धिक्! मामप्येवमवगच्छति महाराजः; अहं पुनर-

(४२) प्रकृतप्राप्तिः कथैव माऽस्तु, आलिख्येऽपि तां समवाप्य चित्रपटेऽपि तां प्राप्य किं मे नयनयोरुदाप्लत्वं न भविष्यति? भविष्यत्येव। एतेन कृशता जागरणम् अरतिश्चेति विविधा कामदशा प्रकटिता। हरिणी छन्दः।

(४३) अनेन विना मम पुनर्यादृक् हृदयमास्ते, न तत्पर्य्याप्तिकारणमेतद्वचनम् इति भावः।

(४४) यो जनः उर्वशीरूपः मम नितान्तकठिनां मानसीं रुजं न वेद न जानाति, वा अथवा प्रभावेण ध्यानबलेन विदितानुरागं ज्ञातप्रेमासङ्गं माम् अवमन्यते। पञ्चबाणः कामः तस्मिन् एवम्भूते जने अबद्धफलनीरसं वैफल्यकठोरं समागममनोरथं प्रतिनिधाय प्रतिष्ठाप्य कृती भवतु। दुर्लभसमागमं जनं प्रति आसक्तिं जनयन् दहतु पीड़यतु कृतकृत्यश्च भवतु इति भावः। एतेन ह्रीत्यागोन्मादरूपा कामदशा प्रख्यापिता। पृथ्वी छन्दः।

चित्र। अणुमदं मे। (स)

उर्व। [नाट्येनाभिलिख्य चिपति]।

विदू। अविद! भो! किसेदं? भुअंगणिम्मोअ (४५) किं खादिदुं मं णिवडिदं?। (ह)

राजा। [दृष्ट्वा]। नायं भुजङ्गनिर्मोकः, भूर्जपत्रगतोऽयमक्षरविन्यासः।

विदू। णं अदिट्ठाए उव्वसीए भवदो परिदेविअं सुणिअ भुज्जवत्ते महाणुराअसूअआ अक्खरा अहिलिहिअ विसज्जिआ भवे। (च)

राजा। नास्ति अशक्यं दैवस्य। [गृहीत्वा अनुवाच्य च सहर्षम्]। सखे! उपपन्नस्ते वितर्कः।

विदू। जं एत्थ अहिलिहिदं तं सुणिदुं इच्छामि। (क)

उर्व। साहु साहु अज्ज! णाअरोसि। (ख)

राजा। श्रूयताम्। [इति वाचयति]।—

सामिअ! संभाविअ जह अहं तुए आअलिआ ण तहेअ।
अणुरत्तस्स अइ सुहअ! एअं एअ तुह णवरो ण॥ (ग) (४६)

---

समर्थाऽस्मि अपतो भूत्वा आत्मानं दर्शयितुम्; तत् प्रभावनिर्मितेन भूर्जपत्रेण लेखं सम्पाद्य अन्तरा अस्य क्षिप्तुमिच्छामि।

(स) अनुमतं मे।

(ह) अविद! भोः! किमिदम्? भुजङ्गनिर्मोकः किं खादितुं मां निपतितः?।

(च) ननु! अदृष्टया उर्वश्या भवतः परिदेवितं श्रुत्वा भूर्जपत्रे महानुराग-सूचकानि अक्षराणि अभिलिख्य विसृष्टानि भवेयुः।

(क) यदत्र अभिलिखितं तत् श्रोतुमिच्छामि।

(ख) साधु साधु आर्य! नागरोऽसि।

(ग) स्वामिन्! सम्भाव्य यथाऽहं त्वया आकलिता न तथैव।
अनुरक्तस्य अयि सुभग! एवमेव तव केवलं न॥

---

(४५) आविदेति सम्भ्रमे। भुजङ्गनिर्मोकः सर्पत्वक्।

ण मे ललिअ-पारिजाअ-सअणिज्जम्मि पिअ ! होदि सुहं ।
णंदण-वण-वाआवि हि सिहि विअ भांदि णिअसरीरए॥ (घ)(४७)

उर्व। किसु क्खु संपदं भणेदि ?। (ङ)

चित्र। किं ण भणिदं इमिणा मिलाण-कमल-णाल-सरिसेहिं अंगेहिं ?। (च)

विदू। दिट्ठिआ मए बुभुक्खिदेण सोत्थिवाअणिअं विअ लद्धं भवदो समस्सासणकारणं। (छ)

---

(घ) न मे ललित-पारिजात-शयनीयमपि प्रिय ! भवति सुखम् ।
नन्दन-वनवाता अपि हि शिखिन इव भान्ति निजशरीरे ॥

(ङ) किं नु खलु साम्प्रतं भणति ?।

(च) किं न भणितममुना म्लानकमलनालसदृशैरङ्गैः ?।

(छ) दिष्ट्या मया बुभुचितेन स्वस्तिवाचनिकमिव लब्धं भवतः समाश्वासनकारणम् ।

---

(४६-४७) हे स्वामिन् ! हे पते ! एतत्सम्बोधनपदेनैव व्यक्तीभूतमिङ्गितम्। स्वाङ्गदानप्रकटने हि नारीणां स्वामीति पदात् अन्यत् किमपि नास्ति प्रयोक्तव्यम् । त्वया सम्भाव्य अनुमाय अहं यथा यादृशी आकलिता निरूपिता, पराधीनत्वात् नास्ति ममावसरः तव मनोरथपूरणाय इत्येवं मत्स्वरूपमविज्ञाय यथा त्वयाऽहं निर्णीता, तथा तत् तेऽनुमानं न एव, यतः अहं खलु स्वैरिणी स्वाधीना कामगामिनी च अन्यथा ममावागमनं न सम्भवेदिति भावः। अयि सुभग ! हे सुन्दर ! हे प्रेमास्पदेत्यर्थः, अनुरक्तस्य अनुरागवतः सर्व्वस्यापि जनस्येत्यर्थः। एवमेव इत्यमनुमानमेव भवतीति शेषः, न केवलं तव। अथवा पूर्व्वरागवतोर्हि नायकनायिकयोः परस्परमप्राप्तौ नायिकायां नायकस्य यादृगनुमानं भवति, नायिकाया अपि नायकस्योपरि तादृश्येवानुमितिः सम्भवति, ततश्च अहमपि भवति एवमनुमिनोमि यत् त्वमपि स्वाधीनः, प्रथमदर्शनदिवसे मदभिप्रायश्च सम्यगज्ञासीः, स्वर्गारोहणपटुश्च भवान् तथापि मत्समीपे कथं न गतवान् इत्यादि। अतः परं केवलं तवैव कष्टातिशयो न सञ्जातः ममापि तथा इति प्रकटनायाह—हे प्रिय ! मे मम ललितपारिजातशयनीयं कोमलपारिजातकुसुमशय्यापि न सुखं न सुखकरम्। नन्दन-वन-वाता अपि सुस्निग्धगन्धवहा अपि शिखिन इव वह्नय इव निजशरीरे भान्ति शोभन्ते, उद्दीपन-

राजा। समाश्वासनमिति किमुच्यते ? पश्य,—

तुल्यानुरागपिशुनं ललितार्थबन्धं
पत्रे निवेशितमुदाहरणं प्रियायाः।
उत्पक्ष्मलं मम सखे ! मदिरेक्षणाया-
स्तस्याः समागतमिवाननमाननेन ॥ (४८)

उर्व। एत्थ णो समविभागा मदो। (ज) (४९)

राजा। वयस्य ! अङ्गुलीस्वेदेन मे लुप्यन्ते अक्षराः, धार्य्यतामयं स्वहस्ते (५०) निक्षेपः प्रियायाः।

विदू। तदो किं दाणिं तत्थभोदी उव्वसी भवदो मणोरह-तरुकुसुमं दंसिअ फले विसंवददि ?। (झ)

उर्व। हला ! जाव उवत्थाणकादरं अत्ताणअं संठ्ठा-

(ज) अत्रावयोः समविभागा मतिः।

(झ) ततः किमिदानीं तत्रभवती उर्वशी भवतो मनोरथ-तरुकुसुमं दर्शयित्वा फले विसंवदति ?।

विभावत्वात् "कामशाष्टगुणः स्मृतः" इति वचनात्। प्रथमश्लोके आर्य्या वृत्तं, द्वितीये उद्गीतिर्नामार्य्याभेदः।

(४८) हे सखि ! तुल्यानुरागस्य पिशुनं सूचकं ललितार्थबन्धं सुन्दरार्थ-प्रकाशकं पत्रे निवेशितं प्रियाया उदाहरणमवस्थानुयायिवृत्तान्तः मदिरेक्षणाया-स्तस्या उत्पक्ष्मलमाननमिव मम आननेन समायातम्। उदाहरणम् ईदृक्-सुन्दरार्थप्रकाशकं, यत् लेखोपलक्ष्येण तदवस्थासम्पन्नं तन्मुखमेव मन्मुखसङ्गतं सत् आत्मावस्थां कथयति। तदुक्तेर्मन्मुखोच्चारित्वात् तन्मुखस्य मन्मुखसङ्गतिः। मन्मुखे तन्मुखसङ्गत्या तस्या हर्षातिशयात् उत्पक्ष्मलत्वं, लज्जया मदिरेक्षणता च। प्रियतमायां यत् यत् आकाङ्क्षते तत् सर्वमत्रापि अस्ति इति प्रियापदोल्लेखः सार्थकः। वसन्ततिलकं छन्दः।

(४९) लेखोपलक्ष्येण मदभिप्रायो यत्त्वया सुन्दरमवबुद्धस्तत् पाठभङ्ग्यैव प्रतीयते। अतो हि तवैतदुक्तिषु ममापि अंशित्वमस्ति।

(५०) स्वहस्ते इति आदरातिशयद्योतकः।

वेमि, ताव तुमं अत्ताणअं दंसिअ जं मे अणुमदं, तं भणाहि। (ञ) (५१)

चित्र। तह। [इति तिरस्करिणीमपनीय राजानमुपसृत्य]। जेदु जेदु महाराओ। (ट)

राजा। [सम्भ्रमादरगर्भम्]। स्वागतं भवत्यै ? [पार्श्वमवलोक्य]। भद्रे!—

न तथा नन्दयसि मां सख्या विरहिता तया।
सङ्गमे दृष्टपूर्वेव यमुना गङ्गया यथा॥ (५२)

चित्र। णं पढमं मेहराई दीसदि, पच्चा विज्जुलिआ। (ठ)

विदू। [अपवार्य]। कधं ण एसा उव्वसी उवगदा ? तत्थभोदीए सहअरीए एदाए होदव्वं ?। (ड) (५३)

---

(ञ) अयि! यावदुपस्थानकातरमात्मानं संस्थापयामि, तावत् त्वमात्मानं दर्शयित्वा यन्मे अनुमतं तत् भण।

(ट) तथा। जयति जयति महाराजः।

(ठ) ननु प्रथमं मेघराजिर्दृश्यते, पश्चाद्विद्युल्लता।

(ड) कथं नैषा उर्वशी उपगता ? तत्रभवत्याः सहचर्य्या एतया भवितव्यम् ?।

---

(५१) उपस्थानाय सेवार्थं समीपगमनाय कातरं राज्ञः समीपगमनाय अधीरमात्मानं यावत् संस्थापयामि स्थैर्य्यं नयामि, तावत् त्वं प्रकाशीभूय मदनुमतं ब्रूहि। राजोक्तिश्रवणेन निरुत्तरया अप्रकाशितया च क्षणमपि स्थातुमशक्यम्। अतस्त्वं शीघ्रं गत्वा मदनुमतं कथय मा विलम्बस्व। प्रथम-मिलनकाले प्रियसमक्षं स्त्रीणां स्वत एव आत्माभिव्यक्तिः स्त्रीस्वभावविरोधिनी, अतो हि सखीसम्प्रेषणम्; "दूतीसम्प्रेषणैर्नार्य्यां भावाभिव्यक्तिरिष्यते" इति 'दूत्यः सखी नटी दासी' इति च साहित्यदर्पणे निर्देशात्।

(५२) गङ्गया यमुनेव प्रयागादितीर्थे गङ्गया मिलिता यमुना यथा दर्शकान् नन्दयति तया विरहिता च न नन्दयति एवं सङ्गमे सख्या सह सङ्गतावस्थायां दृष्टपूर्वा त्वं यथा आनन्दयः तया सख्या विरहिता त्वमिदानीं मां तथा न नन्दयसि।

(५३) किम् उर्वशी अतोऽप्यधिकरूपवती ? इति तात्पर्य्यम्।

राजा। एतदासनमास्यताम्।

चित्र। [उपविश्य]। उव्वसी महाराश्रं सिरसा पणमिश्र विस्सवेदि—"। (ढ)

राजा। किमाज्ञापयति ?। (५४)

चित्र। "—मम तस्सिं सुरारिसंभवे दुसए महाराश्रो ज्जेव सरणं आसी, संपदं साहं तुह दंसणसमुत्थेण श्राश्रासिणा बलिश्रं बाधेयमाणा मश्रणेण पुणोवि महाराश्रस्स श्रणुकंपणीश्रा होमि। (ण) (५५)

राजा। अयि सखि!—

पर्य्युत्सुकां कथयसि प्रियदर्शनां ता-
मार्त्तिं न पश्यसि पुरूरवसस्तदर्थाम्।
साधारणोऽयमुभयोः प्रणयो यतस्त्व
तप्तेन तप्तमयसा घटनाय योग्यम्॥ (५६)

चित्र। [उर्वशीमुपेत्य]। हला! इदो एहि, णिद्दश्रदरं भीसणमश्रणं पेक्खिश्र पिश्रदमस्स दे दूईम्हि संवुत्ता। (त)

(ढ) उर्वशी महाराजं शिरसा प्रणम्य विज्ञापयति—"।

(ण) "—मम तस्मिन् सुरारिसम्भवे दुर्नये महाराज एव शरणमासीत्, साम्प्रतं साहं तव दर्शनसमुत्थेन आयासिना बलवद्बाध्यमाना मदनेन पुनरपि महाराजस्य अनुकम्पनीया भवामि।

(त) अयि! इत एहि; निर्दयतरं भीषणमदनं प्रेक्ष्य प्रियतमस्य ते दूती अस्मि संवृत्ता।

(५४) रमणीनां दासत्वाङ्गीकरणं परमप्रणयवताम् उचितमेव।

(५५) पूर्वं निःसम्पर्कमेव त्वया अहमसुरहस्तात् रचिता, इदानीं पुनः त्वद्दर्शनसमुत्थेन ततोऽपि अधिकदारुणेन, बलवद्बाध्यमानत्वात्, मदनेन अहं क्लिश्यमाना। अधुना तत्ताड़नमपि उपशमय इति भावः।

(५६) अयि पक्षपातिनि! त्वत्सखीकृतां मम इमां यातनां न पश्यसि केवलं तदुत्सुकतामेव भाषसे, त्वं तव सखीपक्षे यत् किमपि कथयसि, सर्वेण एतेन तस्याः

उर्व। [शोकात् सकम्पा ससाध्वसा]। अइ अणवत्थिदे! लहुं ज्जेव तुए परिच्चत्ता म्हि!। (थ) (५७)

चित्र। [सस्मितम्]। एदस्सिं मुहुत्ते जाणिस्सामो का कं परिच्चइस्सदि त्ति। आआरं दाव पलिवज्ज। (द)

उर्व। [ससाध्वसमुपसृत्य सव्रीडम्]। जेदु जेदु महाराओ। (ध)

राजा। [सहर्षम्]। सुन्दरि!—

मया नाम जितं यस्य त्वया जय उदीर्य्यते।
जयशब्दः सहस्राच्चादागतः पुरुषान्तरम्॥ (५८)

[हस्ते गृहीत्वा आसने उपवेशयति]।

विदू। कीदिसी त्थिदी भोदिए? रञ्जो पिअवअस्सो बम्हणो ण वंदीअदि?। (न) (५९)

उर्वशी। [सस्मितं प्रणमति]।

---

(थ) अयि अनवस्थिते! लघु एव त्वया परित्यक्ताऽस्मि!।

(द) एतस्मिन् मुहूर्त्ते ज्ञास्यामः का कां परित्यक्ष्यतीति। आकारं तावत् प्रतिपद्यस्व।

(ध) जयति जयति महाराजः।

(न) कीदृशी स्थितिर्भवत्याः? राज्ञः प्रियवयस्यो ब्राह्मणो न वन्द्यते?।

---

पर्य्युत्सुकत्वमेव व्यज्यते, मम तु तदर्थे विषमार्त्तिर्जनिता, तत्र पश्यसि इति भावः। वसन्ततिलकं छन्दः।

(५७) अयि अव्यवस्थिते! कथं राज्ञी वचनमात्रेणैव तत्पक्षमवलम्ब्य त्वया अहं परित्यक्ता!।

(५८) त्वया यस्य मम जय उदीर्य्यते उच्चार्य्यते, तेन मया जितं नाम, नामेति हर्षसूचकं निश्चयार्थकं वा अव्ययम्। कथं मया जितम्? इत्याह, जयशब्दः त्वया उदीरितः जय इति शब्दः सहस्राच्चात् इन्द्रात् पुरुषान्तरम् अन्यपुरुषं, मामित्यर्थः, आगतः प्राप्तः। त्वदुच्चारितजयशब्दश्रवणे सुरपतिरेव एकमात्राधिकारी आसीत्, इदानीन्तु अहमपि तदधिकारी जातः अतो मया जितमिति भावः।

(५९) स्थितिः लोकमर्य्यादाज्ञता; यद्वा—स्थितिरवस्थानमुपवेशनमिति यावत्।

विदू। सोत्थि भोदिए। (प)

देवदूत:। [ नेपथ्ये ]। चित्रलेखे ! त्वरय उर्वशीम्।—

मुनिना भरतेन य: प्रयोगो भवतीष्वष्टरसाश्रयो निबद्ध:।
ललिताभिनयं तमद्य भर्त्ता मरुतां द्रष्टुमना: सलोकपाल:॥ (६०)

सर्वे। [ आकर्णयन्ति ]।

उर्वशी। [ विषादं रूपयति ]।

चित्र। सुदं तुए देअदूअस्स बअणं ? ता अणुजाणाहि दाव महाराअं। (फ)

उर्व। [ निश्वस्य ]। णत्थि मे बाआविहवो। (ब)

चित्र। महाराअ! उव्वसी विस्सवेदि, परवसी अअं जणो, महाराएण अब्भणुसादा इच्छामि देअदेअस्स अणवरद्धं अत्ताणअं कादुं। (भ) (६१)

राजा। [ कथंकथमपि वचनं संस्थाप्य ]। नाहं भवत्योरीश्वरनियोगहन्ता ; किन्तु स्मर्त्तव्योऽयं जन:।

उर्वशी। [ वियोगदु:खं रूपयित्वा राजानं पश्यन्ती सह सख्या निष्क्रान्ता ]।

राजा। [ सनिश्वासम् ]। वैयर्थमिव चक्षुष: सम्प्रति।

विदू। [ पत्रं दर्शयितुकाम: ]। णं भुज्ज—" [ इत्यर्द्धोक्तेनात्मगतम् ]।

---

(प) स्वस्ति भवत्यै।

(फ) श्रुतं त्वया देवदूतस्य वचनम् ? तदनुज्ञापय तावत् महाराजम्।

(ब) नास्ति मे वाग्विभव:।

(भ) महाराज ! उर्वशी विज्ञापयति, परवशोऽयं जन:, महाराजेन अभ्यनुज्ञाता इच्छामि देवदेवस्य अनपराद्धमात्मानं कर्त्तुम्।

---

(६०) प्रयोग: दृश्यकाव्यभेद:। भवतीषु निबद्ध: निर्माय भवतीभ्योऽभिनयशिक्षार्थमर्पितवान् इत्यर्थ:। औपच्छन्दसिकं छन्द:।

(६१) अनपराद्धमात्मानं कर्त्तुम् आज्ञालङ्घनापराधरहितं कर्त्तुमित्यर्थ:।

अविद अविद ! ( ६२ ) भो ! उब्बसीदंसणविम्हिदेण मए तं भुज्जवत्तं पब्भट्टं पि हत्तादो ण विसादं !। ( म )

राजा। किमसि वक्तुकामः ?।

विदू। वअस्स ! इदम्हि वत्तुकामो, ण भवं अंगाइं मुंचदु ; दिढ़ं क्खु तइ बद्धभावा उब्बसी, ण सा इदो गदुअ एदं अणुबंधं सिढ़िलीकरिस्सदि त्ति। ( य ) ( ६३ )

राजा। ममापि एतदेव मनसि वर्त्तते ; तया खलु प्रस्थाने,—

अनीशया शरीरस्य हृदयं स्ववशं मयि।
स्तनकम्पक्रियालक्ष्यैर्न्यस्तं निश्वसितैरिव ॥ ( ६४ )

विदू। [ स्वगतम् ]। वेवदि मे हिअअं ; केत्तिअं वेलं तस्स भुज्जवत्तस्स अत्तभवदा वअस्सेण णामं गेण्हिदव्वं त्ति ?। (र)

राजा। वयस्य ! केनेदानीमुन्मनसमात्मानं विनोदयामि ? [ स्मृत्वा ]। उपनय भूर्जपत्रम्।

---

(म) ननु भूर्ज—"अविद अविद भोः ! उर्वशीदर्शनविस्मितेन मया तत् भूर्जपत्रं प्रभ्रष्टमपि हस्तात् न विज्ञातम् !।

( य ) वयस्य ! इदमस्मि वक्तुकामः, न भवानङ्गानि मुञ्चतु ; दृढ़ं खलु त्वयि बद्धभावा उर्वशी, न सा इतो गत्वा एतमनुबन्धं शिथिलीकरिष्यतीति।

( र ) वेपते मे हृदयं, कियतीं वेलां तस्य भूर्जपत्रस्य अत्रभवता वयस्येन नाम ग्रहीतव्यमिति।

---

( ६२ ) अविद अविदेति सम्भ्रमे।

( ६३ ) बद्धभावा आसक्तरतिः, सञ्जातपूर्वरागा इत्यर्थः। अनुबन्धम् आसक्तिम्। न शिथिलीकरिष्यति न श्लथयिष्यति, क्षीणानुरागा न भविष्यति इत्यर्थः।

( ६४ ) शरीरस्य आत्मनो देहस्य अनीशया प्रभोरादेशतः अन्यत्र कुत्रापि स्थातुमशक्तया इत्यर्थः। एवम्भूतया तया उर्वश्या स्तनयोः कम्पः उच्छ्वासः स्तनकम्प एव क्रिया तया लक्ष्यैः सूचितैः निश्वसितैः करणैः स्ववशं स्वाधीनं हृदयं मयि न्यस्तमिव मम हस्ते अर्पितमिव। पराधीनत्वात् स्वदेहार्पणे असमर्थया हृदयं मयि अर्पितमिव इत्यर्थः। अनुष्टुप् छन्दः।

विदू। [सर्वतो दृष्ट्वा सविषादम्]। हा! कधं ण दीसदि! भो! दिव्वं क्खु तं भुज्जवत्तं गदं उव्वसीए मग्गेण। (ल) (६५)

राजा। [सासूयम्]। सर्वत्र प्रमादी वैधेयः। (६६)

विदू। णं विचीअतां। [उत्थाय]। इदो भवे एह वा भवे। [इति बहुविधं नृत्यति]। (व)

[ततः प्रविशति औशीनरी, चेटी च, विभवतश्च परिवारः]।

औशी। हंजे णिउणिए! सच्चं लदाघरं वीसंतो अज्जमाणवअसहाओ दिट्ठो तुए महाराओ?। (श)

चेटी। अलिअं किं मए भट्टिणी विस्सविदपुव्वा?। (ष)

औशी। तेण हि लदाविड़वंतरिदा सुणिस्सं दाव विस्सद्धमंतिदाइं, जं तुए कधिदं सच्चकं ण वेत्ति। (स)

चेटी। जं देईए रुच्चदि। (ह)

औशी। [परिक्रम्य पुरस्तादवलोक्य च]। णिउणिए! किमेदं पत्तं णवचीरअं विअ इदो दक्खिणमारुदेण आणीअदि?। (च)

---

(ल) हा! कथं न दृश्यते! भोः! दिव्यं खलु तद्भूर्जपत्रं गतम् उर्वश्या मार्गेण।

(व) ननु! विचीयताम्। इतो भवेत् इह वा भवेत्।

(श) अयि निपुणिके! सत्यं लतागृहं विशन् आर्य्यमाणवकसहायो दृष्टस्त्वया महाराजः?।

(ष) अलीकं किं मया भर्त्री विज्ञापितपूर्वा?।

(स) तेन हि लताविटपान्तरिता श्रोष्यामि तावत् विश्रम्भमन्त्रितानि, यत्त्वया कथितं सत्यकं न वेति।

(ह) यद्देव्यै रोचते।

(च) निपुणिके! किमेतत् पत्रं नवचीरमिव इतो दक्षिणमारुतेन आनीयते?।

---

(६५) उर्वशीवत् भूर्जपत्रमपि गतम् इत्यर्थः।

(६६) वैधेयः मूर्खः। प्रमादी अनवहितः, "प्रमादोऽनवधानता" इत्यमरः।

चेटी । [ विभाव्य ] । भट्टिणि ! पलिवत्तणा-बिभाविदक्खरं भुज्जवत्तं क्खु एदं । हंत ! कधं देईए ज्जेव णेउरपरिलग्गं ! [ गृहीत्वा ] । णं बाचीअदु एदं । (क) (६७)

औशी । णं अवलोएहि दाव, जइ अविरुद्धं तदो सुणिस्सं । (ख)

चेटी । [ तथा कृत्वा ] । भट्टिणि ! तं ज्जेव एदं कोलीणअं विजिंभदि ; महाराअं उद्दिसिअ उव्वसीअक्खरअं कव्व-बंधं त्ति तक्केमि, अज्जमाणवअ-प्पमादादो (६८) अम्हाणं हत्थं आअदं त्ति । (ग)

औशी । णं गहिदत्था होहि । (घ)

चेटी । [ वाचयति ] ।

औशी । हंजे ! एदेण ज्जेव उवहारेण तं अच्छराकामुअं पेक्खम्ह । (ङ)

चेटी । जं देई आसवेदि । (च)

---

( क ) भर्त्रि ! परिवर्त्तनाविभाविताक्षरं भूर्जपत्रं खलु एतत् । हन्त ! कथं देव्या एव नूपुरपरिलग्नम् ! ननु वाचयतु एतत् ।

( ख ) ननु अवलोकय तावत्, यदि अविरुद्धं तदा श्रोष्यामि ।

( ग ) भर्त्रि ! तदेवेदं कौलीनं विजृम्भते ; महाराजमुद्दिश्य उर्वश्यक्षरकं काव्यबन्धमिति तर्कयामि, आर्य्यमाणवकप्रमादादस्माकं हस्तमागतमिति ।

( घ ) ननु ! गृहीतार्था भव ।

( ङ ) हञ्जे ! एतेनैवोपहारेण तमप्सरःकामुकं पश्यामः ।

( च ) यत् देवी आज्ञापयति ।

---

( ६७ ) परिवर्त्तना मारुतसञ्चालनेन यत् पार्श्वपरिवर्त्तनं तेन विभावितानि अक्षराणि यस्य तत् ।

( ६८ ) कौलीनं लोकापवादः । काव्यबन्धं काव्यरचनम् । प्रमादोऽनवधानता ।

राजा। भगवन्! वसन्तसखे! मलयानिल!—

वासार्थं हर सम्भृतं सुरभितं पौष्पं रजो वीरुधां
किं कार्य्यं भवतो हृतेन दयितास्नेहस्वहस्तेन मे।
जानात्येव भवान् विनोदनशतैरेवंविधैर्धारितं
कामार्त्तं जनमञ्जसाभिभवितुं नालम्बिताश्वासनम्॥ (६८)

चेटी। देई! पेक्ख पेक्ख, एदस्स ज्जेव भुज्जवत्तस्स अस्सेसणा वट्टदि। (छ)

औशी। ता णं पेक्खम्ह दाव, तुसिं चिट्ठ। (ज)

विदू। भो! किसु क्खु एदं? उम्मिल्लमाणणीलपंकजच्छविणा मउरपिच्छेण विप्पलद्धम्ह। (झ)

राजा। सर्वथा हतोऽस्मि मन्दभाग्यः।

औशी। [सहसा उपसृत्य]। अज्जउत्त! अलं आवेएण; एदं तं भुज्जवत्तं। (ञ)

---

(छ) देवि! प्रेचस्व प्रेचस्व, एतस्यैव भूर्जपत्रस्य अन्वेषणा वर्त्तते।

(ज) तत् ननु प्रेचावहे तावत्, तूष्णीं तिष्ठ।

(झ) भोः! किं नु खलु एतत्? उन्मीलन्नीलपङ्कजच्छविना मयूरपिच्छेन विप्रलब्धोऽस्मि।

(ञ) आर्य्यपुत्र! अलमावेगेन; एतत् तत् भूर्जपत्रम्।

---

(६८) भगवन् मलयानिल! वासार्थं सौरभार्थं सम्भृतं सचितं सुरभितं सुगन्धं पौष्पं कुसुमसम्बन्धि रजः परागं हर, तत्र न केनापि बाधा जनयितव्या इत्यर्थः; परन्तु दयितायाः प्रियायाः स्नेहस्य प्रणयस्य स्वहस्तेन स्वहस्तलिखितप्रणयपत्रस्वरूपेण अनेन भूर्जपत्रेण हृतेन तव किं कार्य्यम्? अस्ति नाम हृतेषु कुसुमपरागेषु ते सुगन्धलाभः, एतत्तु हृतं ते उपकाराय न प्रभविष्यति इत्यर्थः। एवंविधैः लिपिचित्रादिदर्शनरूपैः विनोदनशतैः धारितं कथमपि मरणात् रचितं तथा च आलम्बिताश्वासनं प्राप्ताश्वासं कामार्त्तं मदनव्यथापीड़ितं जनम् अञ्जसा बलेन अभिभवितुं भवान् न जानात्येव, न साधु मन्यते एव इत्याभासः। विरहिजनपीड़नं भवत्सदृशस्य शीतलोदाराशयस्य निरन्तरानभीष्टमिति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

राजा। [ससम्भ्रममात्मगतम्]। अये! देवी! [सवैलक्ष्यं प्रकाशम्]। स्वागतं देव्यै?।

औशी। दुरागदं दाणिं मे संवुत्तं। (ट) (७०)

राजा। [जनान्तिकम्]। वयस्य! कथमत्र प्रतिविधेयम्?।

विदू। [जनान्तिकम्]। लोत्तेण सुइदस्स कुंभिलअस्स णत्थि वाआ पलिविधाणं। (ठ) (७१)

राजा। [अपवार्य्य]। मूढ़! नायं परिहासकालः। [प्रकाशम्]। नेदं पत्रं मया मृग्यते; तत् खलु मन्त्रपत्रं, यदन्वेषणाय समायमारम्भः।

औशी। जुज्जइ अत्तणो सोहग्गं णिगूहिदुं। (ड)

विदू। भोदि! तुवरावेहि से भोअण, जेण पित्तप्पसमणेण सुत्थो भोदि। (ढ)

औशी। णिउणिए! सोहणं क्खु आस्सासिदो पिअवअस्सो (७२) बम्हणेण; किं अस्सं, अस्सचिंताए आवेसिदो पिओ खिज्जदि। (ण)

---

(ट) दुरागतमिदानीं मे संवृत्तम्।

(ठ) लोप्त्रेण सूचितस्य कुम्भिलकस्य नास्ति वाचा प्रतिविधानम्।

(ड) युज्यते आत्मनः सौभाग्य निगूहितुम्।

(ढ) भवति! त्वरय अस्य भोजनं, येन पित्तप्रशमनेन सुस्थो भवति।

(ण) निपुणिके! शोभनं खलु आश्वासितः प्रियवयस्यो ब्राह्मणेन; किमन्यत्, अन्नचिन्तायामावेशितः प्रियः खिद्यते।

---

(७०) राजा स्वागतमिति प्रयोज्य कुशलं पृष्टवान्, देवी तु सुखेन आगतमिति तदर्थमवधार्य्य वक्रोक्तिचातुर्य्यम् ईर्ष्यामानञ्च सूचितवती। नायिका मध्याधीरा खण्डिता चेयम्।

(७१) लोप्त्रेण स्तेयधनेन। कुम्भिलकस्य चौरस्य।

(७२) विदूषकप्रियवयस्यो राजा।

विदू। णं पेक्ख सव्वो आस्सासिदो चित्तभोअणेण। (त)

राजा। मूर्ख! बलादपराधिनं मामापादयसि?।

औशी। णत्थि प्पभवंतस्स अवराहो, अहं ज्जेव एत्थ अवरद्धा, जा पड़िऊलदंसणा भविअ अग्गदो भवामि। णिउणिए! इदो एहि। (थ) [इति सकोपं प्रस्थातुमुद्यता]।

राजा।—

अपराधी नूनमहं प्रसीद रम्भोरु! विरम संरम्भात्।
सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः?॥ (७३)

[इति पादयोः पतति]।

औशी। किदव! लहुहिअआ क्खु अहं, अणुणअं ण गेण्हामि; किन्तु दक्खिणस्स दे किदपच्चात्तावस्स भाआमि। (द) (७४)

(त) ननु प्रेक्षस्व, सर्व आश्वासितः चित्रभोजनेन।

(थ) नास्ति प्रभवतोऽपराधः, अहमेवात्र अपराद्धा, या प्रतिकूलदर्शना भूत्वा अग्रतो भवामि। निपुणिके! इत एहि।

(द) कितव! लघुहृदया खलु अहम्, अनुनयं न गृह्णामि; किन्तु दक्षिणस्य ते कृतपश्चात्तापस्य बिभेमि।

(७३) अपराधी त्वयि कृतापराधः। विरम विरता भव, संरम्भात् कोपात्, क्रोधं त्यज इत्यर्थः। दासः निरपराधः, भवेदिति शेषः, कोपेन त्वयि अस्थितायां तव प्रसादनमन्तरेण दासोऽयं कथम् अपराधप्रमार्जनं कुर्यात्? इत्यर्थः। कुपितस्य प्रसादनं कर्त्तव्यम्, अतो मा याहि, अहं त्वां प्रसादयामीति भावः।

(७४) दक्षिणस्य वनिताद्वयमनोरथानुवर्त्तिनः कृतपश्चात्तापस्य पादपतनेन मां प्रसादितवानिति ज्ञातरहस्यायामुर्वश्यां किं वक्ष्यसि नितरामनुशयपरो भविष्यसीति भावः। किञ्च मयि अपराद्धेन भवता मच्चरणधारणं विधीयते, उर्वश्यामपराद्धेन भवता किं विधेयम्? पादपतनादभ्यधिकं हि नास्ति अनुनयोपायः इति सोत्प्रासवक्रोक्तिः अत्र अनुसन्धेया। विशेषतश्च अहं मानवी स्वाधीनभर्त्तृका च उर्वशी तु

चेटी। इदो इदो देई। (ध) [इति राजानमपहाय सपरिजना देवी निष्क्रान्ता]।

विदू। पाउस-णई बिअ अप्पसस्सा ज्जेव तत्थभोदी गदा ; ता उट्ठेहि उट्ठेहि। (न)

राजा। [उत्थाय]। वयस्य ! नेदमुपपन्नम्। पश्य,—

प्रियवचनकृतोऽपि योषितां दयितजनानुनयो रसादृते।
प्रविशति हृदयं न तद्विदां मणिरिव कृत्रिमरागयोजितः॥ (७५)

विदू। अणुऊलं ज्जेव भवदो एदं वअणं ; ण हि अक्खि-दुक्खिदो (७६) संमुहे दीवसिहं सहदि। (प)

राजा। मैवम्, उर्वशीगतमनसोऽपि मम देव्यां स एव बहुमानः ; किन्तु प्रणिपातलङ्घनादहमपि तस्यां धैर्य्यमवलम्बिष्ये। (७७)

विदू। भो ! चिट्ठदु दाव देईकधा ; बुभुक्खिदस्स मे

---

(ध) इत इतो देवी।

(न) प्रावृड्-नदीव अप्रसन्नैव तत्रभवती गता ; तदुत्तिष्ठ उत्तिष्ठ।

(प) अनुकूलमेव भवत एतद्वचनम् ; न हि अक्षिदुःखितः सम्मुखे दीपशिखां सहते।

---

स्वर्गीया स्वर्वेश्या च। अथ यदि माहशीनाम् अनिपुणानां पादपतनं मानभञ्जनोपायः, तदा सुनिपुणानां वेश्यानां मानभञ्जने का गतिः स्यात् ? इति अलङ्काररहस्यमपि अत्र रसविशेषभावनाचतुरैः अवगन्तव्यम्।

(७५) प्रियवचनकृतः "अपराधी नूनमहं प्रसीद रम्भोरु ! विरम" इत्यादिभिः चाटूक्तिभिः सम्पादितः। रसादृते अनुरागं विना हृदयं न प्रविशति, हृदयग्राही न भवति। तद्विदां मणीनां गुणदोषविचारक्षमाणाम्। कृत्रिमरागयोजितः कल्पितवर्णचित्रितः। आर्य्या वृत्तम्।

(७६) अक्षिदुःखितः चक्षूरोगग्रस्तः।

(७७) अहमपि तस्यां धैर्य्यमवलम्बिष्ये अहमपि उपेक्षामवलम्बिष्ये।

जीविअं अवलंबदु भवं; समओ क्खु ह्लाणभोअणं सेविदुं। (फ)

राजा। [ऊर्द्धमवलोक्य]। कथमर्द्धं गतं दिवसस्य! अतः खलु।—

उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी
निर्भिद्योपरि कर्णिकारकुसुमान्याशेरते षट्पदाः।
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीड़ावेश्मनिवेशिपञ्जरशुकः क्लान्तो जलं याचति॥ (७८)

[इति निष्क्रान्तौ]।

इति द्वितीयोऽङ्कः।

---

## तृतीयोऽङ्कः।

[ततः प्रविशतो भरतशिष्यौ]।

प्रथमः। सखे पैलव! अग्निशरणाद्गच्छता महेन्द्रमन्दिरमुपाध्यायेन त्वमासनं ग्राहितः, अहमग्निशरणरक्षार्थं स्थापितः; ततः पृच्छामि गुरोः प्रयोगेण देवपरिषत् आराधिता न वेति।

द्वितीयः। गालव! ण आणे कधं आराहिदा भोदि; तस्सिं

---

(फ) भोस्तिष्ठतु तावत् देवीकथा; बुभुक्षितस्य मे जीवितमवलम्बतां भवान्; समयः खलु स्नानभोजने सेवितुम्।

---

(७८) उष्णालुः ग्रीष्मतप्तः। षट्पदाः भ्रमराः। कर्णिकारकुसुमानि निर्भिद्य उपरि आशेरते। कारण्डवः दीर्घचरणकृष्णवर्णहंसविशेषः "खड़ाहाँस" इति भाषा। तप्तं वारि विहाय तीरनलिनीं सेवते। शार्दूलविक्रीड़ितं वृत्तम्।

उण सरस्सईकिदकव्वबंधे लच्छीसअंवरे (१) उव्वसी तेसु तेसु रसंतरेसु उम्मादइदा आसी। (क)

प्र। दोषविकाश इव वाक्यशेषः।

द्वि। आं, ताए वअणं क्खलिदं आसी। (ख)

प्र। किमिव ?।

द्वि। लच्छीभूमिआए वत्तमाणा (२) उव्वसी वारुणी-भूमिआएं वत्तमाणाए मेणआए पुच्छिदा, "समागदा तिल्लोअ-पुरिसा सकेसवा लोअवाला; कस्सिं दे हिअआहिणिवेसो ?" त्ति। (ग)

प्र। ततस्ततः ?।

द्वि। ताए पुरिसोत्तमे त्ति भणिदव्वे पुरूरवसि त्ति णिग्गदा वाणी। (घ)

प्र। भवितव्यतानुविधायीनि (३) बुद्धीन्द्रियाणि; न तामभिक्रुद्धो मुनिः ?।

द्वि। सत्ता उअज्झाएण; महेंदेण उण अणुग्गहिदा। (ङ)

(क) गालव! न जाने कथम् आराधिता भवति; तस्मिन् पुनः सरस्वतीकृत-काव्यबन्धे लक्ष्मीस्वयंवरे उर्वशी तेषु तेषु रसान्तरेषु उन्मादिता आसीत्।

(ख) आं, तस्या वचनं स्खलितमासीत्।

(ग) लक्ष्मीभूमिकायां वर्त्तमाना उर्वशी वारुणीभूमिकायां वर्त्तमानया मेनकया पृष्टा, "समागताः त्रिलोकपुरुषाः सकेशवा लोकपालाः; कस्मिन् ते हृदयाभिनिवेशः ?" इति।

(घ) तस्याः पुरुषोत्तमे इति भणितव्ये पुरूरवसि इति निर्गता वाणी।

(ङ) शप्ता उपाध्यायेन; महेन्द्रेण पुनरनुग्राहिता।

(१) लक्ष्मीस्वयंवरे तदाख्यदृश्यकाव्यप्रयोगे।

(२) लक्ष्मीभूमिकायां वर्त्तमाना अभिनयार्थे लक्ष्मीवेशधारिणी; "भूमिका रचनायां स्यान्मूर्त्यन्तरपरिग्रहे" इति विश्वः।

(३) भवितव्यतानुविधायीनि भवितव्यता निश्चितफलानामवश्यम्भावः तस्या

प्र। कथमिव ?

द्वि। "जेण तुए मम उवदेसो लंघिदो, तेण ण दे दिव्वं णाणं हुविस्सदि" त्ति उअज्झाअस्स सआसादो साओ। पुरंदरेण उण लज्जाओणदमुहिं उव्वसिं पेक्खिअ एव्वं भणिदं, "जस्सिं बद्धभावासि तुमं तस्स मे रणसहाअस्स राएसिणो पिअं करणिज्जं, ता तुमं पुरूरवसं जधाकामं उवचिट्ठ, जाव सो पडिट्ठिदसंदाणो भोदि" त्ति। (च)

प्र। सदृशं पुरुषान्तरवेदिनो (४) महेन्द्रस्य।

द्वि। [सूर्य्यमवलोक्य]। कधाप्पसंगेण अवरद्धा (५) अहिसेअवेला, ता उअज्झाअस्स पासपलिबत्तिणो होम्ह। (छ)

[इति निष्क्रान्तौ]।

विष्कम्भकः। (६)

---

(च) "येन त्वया मम उपदेशो लङ्घितस्तेन न ते दिव्यं ज्ञानं भविष्यति" इति उपाध्यायस्य सकाशात् शापः। पुरन्दरेण पुनर्लज्जावनतमुखीमुर्वशीं प्रेक्ष्य एवं भणितं, "यस्मिन् बद्धभावासि त्वं तस्य मे रणसहायस्य राजर्षेः प्रियं करणीयम्; तस्मात् त्वं पुरूरवसं यथाकाममुपतिष्ठस्व, यावत् स प्रतिष्ठितसन्तानो भवति" इति।

(छ) कथाप्रसङ्गेन अपराद्धा अभिषेकवेला, तदुपाध्यायस्य पार्श्वपरिवर्त्तिनौ भवावः।

---

अनुविधायीनि अनुसारीणि। उर्वश्याः पुरूरवसा समागमः नियतः, अत एव गीतस्खलनं तदनुसारि एव इति भावः।

(४) पुरुषान्तरवेदिनः स्वयं पुमान् सन् मदनव्यथाकातरस्य पुरुषान्तर दुःखं जानातीति भावः।

(५) अपराद्धा अतिक्रान्ता।

(६) विष्कम्भकलक्षणं यथा दर्पणे,—

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।

सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥" इति।

[ततः प्रविशति कञ्चुकी]। (७)

कञ्चुकी।—

स्वैः कल्ये वयसि यतते लब्धुमर्थान् कुटुम्बी
पश्चात् पुत्त्रैरुपहितभरः कल्पते विश्रमाय।
अस्माकन्तु प्रतिदिनमियं सादयन्ती प्रतिष्ठां
सेवाकाकुः परिणतिरभूत् स्त्रीषु कष्टोऽधिकारः॥ (८)

आदिष्टोऽस्मि सनियमया काशिराजपुत्त्र्या यथा—"व्रत-सम्पादनाय मया मानमुत्सृज्य निपुणिकामुखेन पूर्वं याचितो महाराजः; तदेवं मद्वचनाद्विज्ञापयेति—यावदहमवसित-सन्ध्याकार्य्यं महाराजं पश्यामि।" [परिक्रम्य अवलोक्य च]। रमणीयः किल दिवसावसानवृत्तान्तो (९) राजवेश्मनः।—

उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा वर्हिणो
धूपैर्जालविनिःसृतैर्वड़भयः सन्दिग्धपारावताः।
आचारप्रयतः सपुष्पबलिषु स्थानेषु चार्चिष्मतीः
सन्ध्यामङ्गलदीपिका विभजते शुद्धान्तवृद्धो जनः॥ (१०)

---

(७) कञ्चुकिलक्षणं यथा—

"अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः।
सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते॥" इति दर्पणे।

(८) कल्ये वयसि कार्य्योपयोगिनि वयसि यौवने। कुटुम्बी स्त्रीपुत्त्रादि-परिवारपोषणभारग्रस्तः। पुत्त्रैरुपहितभरः पुत्त्रेषु न्यस्तकुटुम्बपालनभार इत्यर्थः। विश्रमाय कल्पते विश्रामसुखमनुभवति इत्यर्थः। अस्माकन्तु प्रतिष्ठां गौरवं सादयन्ती नाशयन्ती इयं परिणतिः वयःपरिणामः वार्द्धक्यम् इत्यर्थः, सेवाकाकुरभूत् सेवाकातरा अभूत्। स्त्रीषु अधिकारः स्त्रीणां रक्षणभारः कष्टः कष्टकरः। मन्दाक्रान्ता वृत्तम्।

(९) दिवसावसानवृत्तान्तः सायंकालद्रष्टव्यव्यापारः।

(१०) उत्कीर्णा इव लिखिता इव, आवासदण्डेषु निश्चलत्वात् चित्रिता इव इत्यर्थः। जालविनिःसृतैः गवाक्षजालैर्निर्गच्छद्भिः धूपैः तदुत्थितधूमैः वड़भयः प्रासादाग्रगृहाणि सन्दिग्धपारावताः पारावतसञ्चारसन्देहं जनयन्तीत्येव आचारप्रयतः

[ अवलोक्य ]। अयि ! इत एव प्रस्थितो देवः। य एषः,—

परिजनवनिताकरार्पिताभिः
परिवृत एष विभाति दीपिकाभिः।
गिरिरिव गतिमानपक्षसादा-
दनुतटपुष्पितकर्णिकारयष्टिः॥ (११)

यावदेनमवलोकनमार्गे प्रतिपालयामि।

[ ततः प्रविशति यथानिर्दिष्टः सपरिवारो राजा विदूषकश्च ]।

राजा। [ आत्मगतम् ]।—

कार्य्यान्तरितोत्कण्ठं दिनं मया नीतमनतिकृच्छ्रेण।
अविनोददीर्घयामा कथं नु रात्रिर्गमयितव्या ? ॥ (१२)

कञ्चुकी। [ उपगम्य ]। जयति जयति देवः। देव! देवी विज्ञापयति—"मणिहर्म्यपृष्ठे सुदर्शनश्चन्द्रः, तत्र सन्निहितेन देवेन प्रतिपालनीयः यावत् चन्द्ररोहिणीयोगः।"

---

गृहीतनियमः गृहान्तरङ्गः अन्तःपुरवर्त्तिनी जनः सपुष्पबलिषु स्थानेषु सन्ध्यामङ्गलदीपिका विभजति स्वेषु स्थानेषु विभज्य स्थापयति इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्।

(११) परिजनवनितानां दीपधारिणीनां परिचारिकाणां करेषु अर्पिताभिः न्यस्ताभिः, स्थिताभिरित्यर्थः, दीपिकाभिः आलोकवर्त्तिकाभिः परिवृतः एष देवः अनुतटं सानुदेशे प्रान्तदेशे इत्यर्थो वा, पुष्पिता सञ्जातपुष्पा कर्णिकारयष्टिः कर्णिकारदण्डः, आरग्वधवृक्ष इत्यर्थः, यस्य तादृशः, अपक्षसादात् पक्षच्छेदनाभावात्, सपक्ष इत्यर्थः, अत एव गतिमान् गमनशीलः गिरिरिव विभाति शोभते। पुष्पिताग्रा वृत्तम्।

(१२) कार्य्यान्तरितोत्कण्ठं कार्य्यैः राज्यशासनव्यवहारदर्शनादिभिः अन्तरिता आच्छादिता उत्कण्ठा उर्वशीसमागमचिन्ता यस्मिन् तत्। अनतिकृच्छ्रेण अनतिकष्टेन नीतं यापितम्। अविनोददीर्घयामा अविनोदाः विनोदनोपायरहिताः अत एव दीर्घाः यामाः प्रहराः यस्याः सा। आर्य्या वृत्तम्।

राजा। विज्ञाप्यतां देवी, यस्तव छन्द इति। (१३)

कञ्चुकी। तथा। [इति निष्क्रान्तः]।

राजा। वयस्य! किमु परमार्थतः (१४) एव देव्या व्रतनिमित्तोऽयमारम्भः स्यात्?।

विदू। तक्केमि, संजादपच्छादावा अत्तभोदी वदव्ववदेसेण तत्तभवदो प्पणिपादलंघणं प्पमुज्जिदुकाम त्ति। (ज)

राजा। उपपन्नं भवान् आह।—

अवधूतप्रणिपाताः पश्चात् सन्तप्यमानमनसो हि।
विविधैरनुतप्यन्ते दयितानुनयैर्मनस्विन्यः॥ (१५)

तत् आदेशय (१६) मणिहर्म्यपृष्ठस्य मार्गम्।

विदू। इदो इदो एदु भवं, इमिणा गंगातरंगसिसिरेण फड़िअमणिसिलासोवाणेण (१७) आरोहदु भवं सव्वधा रमणिज्जं मणिहम्मदलं। (झ)

राजा। [आरोहति]।

---

(ज) तर्कयामि, सञ्जातपश्चात्तापा अत्रभवती व्रतव्यपदेशेन तत्रभवतः प्रणिपातलङ्घनं प्रमार्ष्टुकामेति।

(झ) इत इत एतु भवान्, अमुना गङ्गातरङ्गशिशिरेण स्फटिकमणिशिलासोपानेन आरोहतु भवान् सर्वथा रमणीयं मणिहर्म्यतलम्।

---

(१३) यस्तव छन्दः यस्तव अभिरुचिः।

(१४) परमार्थतः याथार्थ्यतः।

(१५) अवधूतप्रणिपाताः अवधीरितप्रणामाः। मनस्विन्यः खलु इतरस्त्रीवत् न सामान्यप्रलोभनपराः, नापि सातिशयरुचाः। तास्तु विशिष्टापराधिनं प्रणिपतन्तमपि प्रियतममवमन्यन्ते, पश्चात् दयितकृतं तं तम् अनुनयं संस्मृत्य अपि अनुतप्यन्ते। आर्या वृत्तम्।

(१६) आदेशय इत्यत्र आदिश इति सम्यक्।

(१७) गङ्गातरङ्गेण स्फटिकसोपानस्य शुभ्रत्वे उन्नतोन्नतत्वे च साम्येऽपि विरह-

सर्वे। [ सोपानारोहणं नाटयन्ति ]।

विदू। [ निरूप्य ]। पच्चासरसेण चंदेण होदव्वं, जधा तिमिरेण रेचीअमाणं (१८) पुव्वदिसामुहं आलोहिदप्पहं दीसदि। (ञ)

राजा। सम्यग् भवान् मन्यते।—

उदयगूढशशाङ्कमरीचिभि-
स्तमसि दूरतरं प्रतिसारिते।
अलकसंयमनादिव लोचने
हरति मे हरिवाहनदिङ्मुखम्॥ (१९)

विदू। ही ही! भो भो! एसो खंडमोदअसरिसो उदिदो राआ ओषधीणं। (ट) (२०)

राजा। [ सस्मितम् ]। सर्वत्र औदरिकस्य अभ्यवहार्य्यमेव विषयः। [ प्राञ्जलिः प्रणम्य ]। ऋक्षराज!—

रुचिमावहते सतां क्रियायै
सुधया तर्पयते पितॄन् सुरांश्च।

---

( ञ ) प्रत्यासन्नेन चन्द्रेण भवितव्यं, यथा तिमिरेण रिच्यमानं पूर्वदिङ्मुखमालोहितप्रभं दृश्यते।

( ट ) ही ही! भोः भोः! एष खण्डमोदकसदृश उदितो राजा ओषधीनाम्।

---

तापतप्तस्य राज्ञः शिशिरोपसेवनं सम्यक् सुखकरम्, अतो हि विदूषकस्य अत्र विशेषेण शिशिरपदोल्लेखः।

( १८ ) रिच्यमानं परिमुच्यमानम्।

( १९ ) उदयेन उदयपर्वतेन गूढैरन्तरितैः शशाङ्कस्य चन्द्रस्य मरीचिभिः किरणैः तमसि अन्धकारे दूरतरं बहुदूरं प्रतिसारिते निराकृते सति। हरिवाहनस्य ऐरावतस्य या दिक् प्राची इत्यर्थः। तस्या मुखम् अलकसंयमनादिव मे लोचने हरति। संयतेषु अलकेषु कस्या अपि वराङ्गनायाः स्पष्टलक्ष्यमाणं मुखं यथा नयने हरति तद्वत् इत्यर्थः। द्रुतविलम्बितं वृत्तम्।

( २० ) नवोदितचन्द्रस्यालोहितप्रभत्वात् खण्डमोदकेन सादृश्यं सुसङ्गतम्।

तमसां निशि मूर्च्छतां निहन्त्रे
हरचूड़ानिहितात्मने नमस्ते ॥ (२१)

विदू। भो ! बम्हणसंकामिदक्खरेण पिदामहेण अब्भणुण्णादोऽसि, आसण्णगदो होहि, (२२) तेण अहंपि सुहासीणो होमि। (ठ)

राजा। [ विदूषकवचनं परिगृह्य उपविष्टः परिजनान् विलोक्य ]। अनभिव्यक्ताश्चन्द्रिकायां दीपिकाः पुनरुक्ताः तद्विश्राम्यन्तु भवत्यः। (२३)

परिजनाः। जं देवो आणवेदि। (ड)

[ इति निष्क्रान्ताः ]।

राजा। [ चन्द्रम आलोक्य विदूषकं प्रति ]। वयस्य ! परं मुहूर्त्ताद्रागमनं देव्याः, तद्विविक्ते कथयामि स्वाम् अवस्थाम्।

---

(ठ) भोः ! ब्राह्मणसङ्क्रामिताक्षरेण पितामहेन अभ्यनुज्ञातोऽसि, आसन्नगतो भव, तेन अहमपि सुखासीनो भवामि।

(ड) यद्देव आज्ञापयति।

---

(२१) रुचिमनुरागमावहते जनयते। सुधया अमृतवर्षेण पितॄन् सुरांश्च तर्पयते प्रीणयते। निशि रात्रौ मूर्च्छतां व्याप्नुवतां तमसां निहन्त्रे अपसारकाय। हरचूड़ानिहितात्मने शङ्करमौलिस्थिताय। अतस्तत्कार्य्यपरम्परादर्शनेन साधूनां प्रवृत्तिः सत्कार्य्येषु उन्मुखीभवति। औपच्छन्दसिकं वृत्तम्।

(२२) ब्राह्मणेत्यादि।—ब्राह्मणे सङ्क्रामितानि अक्षराणि येन तेन ब्राह्मणस्य मम मुखेन स्वाभिप्रायं प्रकाशयति इत्यर्थः। नाहं त्वामासितुमुपदिशामि, चन्द्रस्तु ब्राह्मणस्य क्लेशदर्शने असमर्थः सन् मन्मुखेन त्वामुपदिशति—त्वमासन्नगतो भव इति।

(२३) अनभिव्यक्ताः हीनप्रभाः सन्दिग्धस्थितय इत्यर्थः। पुनरुक्ताः चन्द्रालोकेन सर्वत्र प्रकाशिते प्रकाशार्थं पुनर्दीपिकाधारणं निष्कारणमेव। परिजनानामवस्थितिर्विश्रब्धालापे विघ्नमुत्पादयतीति परिजनापसारणार्थं राज्ञ एवमुक्तिः।

विदू। भो! ण दीसदि ज्जेव सा उव्वसी ; किंतु ताए तारिसं अणुराअं पेक्खिअ सक्कं क्खु आसाबंधेण अत्ताणअं धारिदुं। (ढ) (२४)

राजा। एवमेतत्; बलवान् मनसोऽभितापः; पुनः,—

नद्या इव प्रवाहो विषमशिलासङ्कटस्खलितवेगः।
विघ्नितसमागमसुखो मनसिशयस्त्वनुगुणो भवति॥ (२५)

विदू। जधा परिहीअमाणेहिं अंगेहिं सोहसि, तधा अच्छरेहिं समागमं दे पेक्खामि। (ण) (२६)

राजा। [निमित्तं सूचयन्]।—

वचोभिराशाजननैर्भवानिव गुरुव्यथम्।
अयं मां स्पन्दितैर्बाहुराश्वासयति दक्षिणः॥ (२७)

विदू। ण अस्सधा बम्हणवअणं भोदि। (त)

राजा। [सप्रत्याशं तिष्ठति]।

---

(ढ) भोः! न दृश्यत एव सा उर्वशी; किन्तु तस्यास्तादृशमनुरागं प्रेक्ष्य शक्यं खलु आशाबन्धेनात्मानं धारयितुम्।

(ण) यथा परिहीयमाणैरङ्गैः शोभसे, तथा अप्सरोभिः समागमं ते प्रेक्षे।

(त) नान्यथा ब्राह्मणवचनं भवति।

---

(२४) यद्यपि न सा अधुनापि सम्यक् मञ्चक्षुर्विषयगोचरा, तथापि तत्प्रदर्शित-मनुरागमनुस्मृत्य तदागमनं प्रति निःसन्देह एवाहम्।

(२५) विषमशिलेति।—विषमेषु बन्धुरेषु शिलासङ्कटेषु स्खलितः प्रतिहतो वेगो यस्य। विघ्नितेत्यादि।—विघ्नितं प्रतिबन्धकेन व्याहतं समागमसुखं यस्य। मनसिशयः कामः। अनुगुणः अतिशयः। विना बाधया प्रवाहितो नदीवेगो यथा कठिनतरशिलासङ्कटेषु विघ्नितगतिः सन् आकुलीभूय अन्तरुच्छलति, तथा मन्मनसिशयोऽपि विघ्नितसमागमसुखः सन्नाकुलीभूय अन्तः अत्यर्थं वर्द्धते। आर्या वृत्तम्।

(२६) विरहक्षामाङ्गं त्वां दृष्ट्वा अनुरागपरतन्त्रा उर्वशी आत्मनि तव प्रेमातिशय्यस्मरणेन अतीव हृष्टा सती अवश्यमेव समागमिष्यतीति भावः।

(२७) गुरुव्यथं प्रबलाधिपीड़ितम्। भवान् यथा आशाजननैर्वाक्यैः

[ ततः प्रविशति आकाशयानेन कृताभिसरणवेशा उर्वशी चित्रलेखा च ]।

उर्व। [ आत्मानं विलोक्य ]। सहि! रुच्चदि मे अअं मोत्ताहरणभूसिदो णीलमणिपरिग्गहो अहिसारिआवेसो?। ( थ ) ( २८ )

चित्र। णत्थि वाआ बिहवो पसंसिदुं; इदं तु चिंतेमि,—अवि णाम अहं ज्जेव पुरूरवा भवेयं त्ति। ( द ) ( २९ )

उर्व। सहि! असमत्था क्खु अहं, तुमं आणेहि तं सिग्घं, णेहि मं वा तस्स सुहअस्स वसदिं। ( ध )

चित्र। णं पलिबिंबिअं विअ जामिणीजमुणाए केलाससिहरं सस्सिरीअं दे पिअतमस्स भवनमुपगदम्ह। (न) (३०)

( थ ) सखि! रोचते मे अयं मुक्ताभरणभूषितो नीलमणिपरिग्रहोऽभिसारिकावेशः?।

( द ) नास्ति वाग्विभवः प्रशंसितुम्, इदन्तु चिन्तयामि,—अपि नाम अहमेव पुरूरवा भवेयमिति।

( ध ) सखि! असमर्था खलु अहं, त्वमानय तं शीघ्रं, नय मां वा तस्य सुभगस्य वसतिम्।

( न ) ननु प्रतिविम्बितमिव यामिनी-यमुनायां कैलासशिखरं सश्रीकं ते प्रियतमस्य भवनमुपगते स्वः।

मामाश्वासयति, तथा दक्षिणबाहुरपि स्वस्पन्दनैर्मामाश्वासयति इत्यर्थः, दक्षिणबाहुस्पन्दनस्य वरस्त्रीलाभसूचकत्वादिति भावः।

( २८ ) कविरभिलाषानुरूपं मानसीं प्रतिमां भूषयति, तदत्र सम्यगुपपन्नम्। उर्वशी सुन्दरी, समधिकाभरणप्रसाधने तु स्वाभाविकसौन्दर्यहानिरेवानुमीयते, अतो हि केवलं मुक्तादाम्ना उर्वश्याः प्रसाधनम्। मुक्तानान्तु सम्यक् प्रकाशार्थं नीलमणेः सङ्गतिः। विना तमिस्रया यथा दीपिकालोकोऽननुमेयस्थितिरेव, तथा गौराङ्गे निहिता मुक्ता च समवर्णत्वेन न विभाव्यत एव।

( २९ ) ईदृग्युवतीं हस्ते प्राप्य कथमन्यस्मै उपहरामि? इति भावः।

( ३० ) यामिन्यां प्रतिविम्बितं कैलासशिखरमिव यमुनायां प्रतिविम्बितं ते

उर्व। तेण हि प्पभावेण जाणाहि, कहिं सो मम हिअअ-चोरो, किं बा अणुचिट्ठदि त्ति। (प)

चित्र। [आत्मगतम्]। भोदु, कीलिस्सं दाव एदाए सह। [प्रकाशम्]। हला! दिट्ठो मए उअभोअक्खमे अवआसे मणोरह-लद्धं पिआसमागमसुहं अणुभवंतो चिट्ठदि। (फ) (३१)

उर्व। अवेहि, हिअअं ण मे पत्तिआदि। हला चित्त-लेहे! हिअए का उण किंपि जप्पेसि? पिअसमागमस्स अग्गदो ज्जेव अणेण मे अवहरिदं हिअअं। (ब) (३२)

चित्र। एसो मणिहम्मप्पासादगदो वअस्समित्तसहाओ राएसी; ता उपसप्पम्ह। (भ)

---

(प) तेन हि प्रभावेण जानीहि, कुत्र स मम हृदयचौरः, किं वा अनुतिष्ठतीति।

(फ) भवतु, क्रीडिष्यामि तावदेतया सह। अयि! दृष्टो मया उपभोग-क्षमेऽवकाशे मनोरथलब्धं प्रियासमागमसुखमनुभवंस्तिष्ठति।

(ब) अपेहि, हृदयं न मे प्रत्येति। अयि चित्रलेखे! हृदये का पुनः किमपि जल्पसि? प्रियसमागमस्याग्रत एव अनेन मेऽपहृतं हृदयम्।

(भ) एष मणिहर्म्यप्रासादगतो वयस्यमात्रसहायो राजर्षिः; तस्मादुपसर्पावः।

---

प्रियतमभवनम्। भवनपक्षे—अधःस्था यमुना प्रतिबिम्बग्रहणसमर्था, यामिन्यपि कैलासशिखरपक्षे तथैव। सूर्य्यस्यापलापे अन्धकारमयी या, सा यामिनी, अन्धकारस्तु वर्णहीनः, आधारे सङ्क्रामितः सन् कृष्णवर्णत्वेनानुमीयते, सर्वोन्नतस्य कैलासस्य पृष्ठे पार्श्वे सम्मुखे वापि किमपि वस्तु नास्ति अतोऽधःस्थितेषु पदार्थनिचयेषु अन्धकारस्य सङ्क्रमणत्वात् कैलासपक्षे यामिनी अधःस्थैव।

(३१) मनोरथलब्धं प्रियासमागमसुखं, स्वेच्छयैव प्रियया विहरति, न तु प्रियामनोरथार्थम्।

(३२) तेनापहृतत्वात् हृदयन्तु मे तद्गतमेव, अतस्तत्कार्य्यमेव सर्वं प्रत्यक्षवत् अस्याग्रे प्रतिभाति, किं त्वं वृथा जल्पसि?।

उभे। [अवतरतः]।

राजा। वयस्य! रजन्यां विजृम्भते (३३) मदनबाधा।

उर्व। अभिसत्थेण इमिणा वअणेण आकंपिदं मे हिअअं; अंतरहिदा सुणम्ह से आलावं, जाव णो संसअ-च्छेदो भोदि। (म) (३४)

चित्र। जं दे रोअदि। (य)

विदू। णं इमे अमिअ-गब्भा सेवीअंतु चंदबादा। (र)

राजा। वयस्य! एवमादिभिरनुपक्रम्योऽयमातङ्कः। (३५)—

कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो
न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः।
मनसिजरुजं सा वा दिव्या ममालमपोहितुं
रहसि लघयेदारब्धा वा तदाश्रयणी कथा॥ (३६)

उर्व। हिअअ! जं दाणिं सि मं उज्झिअ इदो संकंतं तस्स फलं तुए उअलद्धं। (ल) (३७)

(म) अभिन्नार्थेनानेन वचनेनाकम्पितं मे हृदयम्; अन्तर्हिते शृणुवोऽस्यालापं, यावदावयोः संशयच्छेदो भवति।

(य) यत् ते रोचते।

(र) ननु इमे अमृतगर्भाः सेव्यन्तां चन्द्रपादाः।

(ल) हृदय! यदिदानीमसि मामुज्झित्वा इतः सङ्क्रान्तं, तस्य फलं त्वया उपलब्धम्।

(३३) विजृम्भते प्रकाशते।

(३४) अभिन्नार्थेन स्फुटमप्रकटितार्थेन। संशयच्छेदः सन्देहभञ्जनम्।

(३५) अनुपक्रम्यो दुरपनेयः। आतङ्कः मदनज्वरः।

(३६) प्रत्यग्रं नूतनं न मथितमित्यर्थः। मलयजं चन्दनम्। सर्वाङ्गीणं सर्वाङ्गेषु लिपितम्। मनसिजरुजमित्यादि।—दिव्या सुरलोकनिवासिनी सा उर्वशी वा तथा रहसि निर्जने आरब्धा तदाश्रयणी तद्विषयिणी कथा वा मम मनसिजरुजं मदनव्यथाम् अपोहितुम् अलं समर्था। एतदन्यत् न किमपि समर्थमित्यर्थः। हरिणी वृत्तम्।

विदू। आं, भो ! अहंपि जदा सिहरिणीं रसालं अ ण लहे, तदा तं ज्जेव चिंतयंतो आसादेमि सुहं। (व) (३८)

राजा। सम्पद्यते पुनर्भवतः। (३९)

विदू। तुमंपि तं अइरेण पाविहिसि। (श)

राजा। सखे ! एवं मन्ये।

चित्र। सुणु असंतुट्टे !। (ष)

विदू। कधं विअ ?। (स)

राजा। इदं तया रथक्षोभादङ्गेनाङ्गं निपीड़ितम्।
एकं कृति शरीरेऽस्मिन् शेषमङ्गं भुवो भरः॥ (४०)

---

(व) आं भोः ! अहमपि यदा शिखरिणीं रसालाञ्च न लभे, तदा तदेव चिन्तयन्नासादयामि सुखम्।

(श) त्वमपि तामचिरेण प्राप्स्यसि।

(ष) शृणु असन्तुष्टे !।

(स) कथमिव ?।

---

(३७) मम इच्छामनपेक्ष्यैव यत् पुरूरवसि समासक्तमासीत्तस्यानुरागस्य पुरस्कर्तृरूपाणि वचनानि श्रुतानीति सर्वथा त्वं खलु कृती, अहन्तु वञ्चिताऽस्मि इति भावः।

(३८) द्राक्षाभेदे शिखरिणीति त्रिकाण्डशेषः। यद्वा—

"द्वात्रिंशत्पलसम्मितं दधि पलान्यष्टौ च खण्डं पल-
स्यार्द्धं चेन्मरिचस्य तेन तुलितं युक्तं त्वगेलाद्वयम्।
मध्वाज्यं च युतं तदर्द्धमिलितं संशोधितैर्योजिता
भाण्डे स्यादिमवासिते शिखरिणी श्रीकण्ठभोग्या गुणैः॥"

इति राजनिघण्टुकसन्धाने।

(३९) रसालाशिखरिणीप्राप्तिः पुनर्भवतः सम्पद्यते। आशानुरूपफलप्राप्तिस्तु पुनर्भवत्येवेति तात्पर्य्यम्।

(४०) रथक्षोभात् तया उर्वश्या अङ्गेन निपीड़ितं प्राप्त-तदङ्गसङ्घर्षणम् इत्यर्थः। इदम् अङ्गं शरीरैकदेशः अस्मिन् शरीरे शरीरमध्ये एकं केवलं कृति कृतकार्य्यं

उर्व। किं दाणिं अवरं बिलंबिस्सं ? [ सहसा उपगम्य ]। हला चित्तलिहे ! अग्गदो वि मए ठ्ठिदाए उदासीणो महाराओ !। (छ)

चित्र। [ सस्मितम् ]। अइ अदि तुबरिदे ! असंक्खित्ततिरक्करिणी असि। (च) (४१)

[ नेपथ्ये ]। इदो इदो भट्टिणी। (क)

सर्वे। [ कर्णं ददति ]।

उर्वशी। [ सह सख्या विषसा ]।

विदू। अविद अविद भो ! उवत्थिदा देई ; ता मुद्दिदमुहो होहि। (ख)

राजा। भवानपि संवृताकारमास्ताम्।

उर्व। हला ! एत्थ किं करणिज्जं ?। (ग)

चित्र। अलं आवेएण, अंतरिदा (४२) दाणिं सि तुमं ; विहिद-णिअम-व्वाबारा अ महिसी दीसदि ; ता एसा ण चिरं चिट्ठिस्सदि त्ति। (घ)

---

(छ) किमिदानीमपरं विलम्बिष्ये ? अयि चित्रलेखे ! अग्रतोऽपि मम स्थिताया उदासीनो महाराजः !।

(च) अयि अतित्वरिते ! असङ्क्षिप्ततिरस्करिणी असि।

(क) इत इतो भट्टिनी।

(ख) अविद अविद भोः ! उपस्थिता देवी, तन्मुद्रितमुखो भव।

(ग) अयि ! अत्र किं करणीयम् ?।

(घ) अलमावेगेन, अन्तरिता इदानीमसि त्वम्। विहितनियमव्यापारा च महिषी दृश्यते ; तदेषा न चिरं स्थास्यतीति।

---

सौभाग्यशालि इत्यर्थः। शेषमङ्गं भुवो भरः निरर्थकत्वात् केवलं पृथिव्या भारभूतम् इत्यर्थः। अनुष्टुप् वृत्तम्।

(४१) असङ्क्षिततिरस्करिणी असङ्क्षिप्ता अनल्पीकृता तिरस्करिणी यस्याः, अद्यापि तिरस्करिणीविद्यया आच्छादितशरीरासि इत्यर्थः ; अत एव अदृश्यायां त्वयि तस्य औदासीन्यम्।

[ ततः प्रविशति व्रतोपहारपरिजना देवी ]।

देवी। [ चन्द्रमालोक्य ]। एसो रोहिणीजोएण अहिअं सोहदि भअवं मिअलंछणो। (ङ)

चेटी। णं संपज्जिस्सदि भट्टिणीसहिदस्स भट्टिणो बिसेसरमणीअदा। (च)

[ इति परिक्रामतः ]।

विदू। भो! णं आणामि, सोत्थिबाअणिअंपि देदि; अधबा भबंतं अंतरेण चंदबदव्बबदेसेण मुक्करोसा अज्ज मे अक्खोणं सुहदंसणा देई। (छ) (४३)

राजा। [ सस्मितम् ]। उभयथापि भवतः; यत्तु पश्चादभिहितं, तन्मां प्रति याति; यदत्रभवती।—

सितांशुका मङ्गलमात्रभूषणा
विचित्रदूर्वाङ्कुरलाञ्छितालका।
व्रतोपदेशोज्झितगर्ववृत्तिना
मम प्रसन्ना वपुषेव लक्ष्यते॥ (४४)

---

(ङ) एष रोहिणीयोगेनाधिकं शोभते भगवान् मृगलाञ्छनः।

(च) ननु सम्पत्स्यते भट्टिनीसहितस्य भर्त्तुर्विशेषरमणीयता।

(छ) भोः! ननु जानामि, स्वस्तिवाचनिकमपि ददाति; अथवा भवन्तमन्तरेण चन्द्रव्रतव्यपदेशेन मुक्तरोषा अद्य मे अक्ष्णोः शुभदर्शना देवी।

---

(४२) अन्तरिता तिरस्करिणीच्छन्ना।

(४३) ननु जानामि मन्ये इत्यर्थः। स्वस्तिवाचनिकमिति।—दैवपैत्रकर्मस्वर्थे उपस्थिता ब्राह्मणाः स्वस्तिवाचका आशीर्वादका भवन्ति, कर्मकर्त्तापि तेभ्यो यत्किञ्चिदभिलषितं धनखाद्यादिकं ददाति च। अथवा, यदा देवी भवन्तमभ्यन्तरीकृत्य कृतचन्द्रव्रतमाचरति, तदा मुक्तरोषैव; यतोऽद्य शुभदर्शना च; अतो मत्स्वस्तिवाचनिके निःसन्देह एव। चन्द्रव्रतव्यपदेशेन चन्द्रमहमाराधयिष्ये इति छलेन।

(४४) सितांशुका शुभ्रवसनपरिधारिणी मङ्गलमात्रभूषणा, माङ्गल्यगोरोच-

देवी। [उपगम्य]। जेदु जेदु अज्जउत्तो। (ज)

परिजनः। जेदु जेदु देओ। (झ)

विदू। सोत्थि भोदीए। (ञ)

राजा। देवि! स्वागतम्?। [हस्ते गृहीत्वा उपवेशयति]।

उर्व। ट्ठाणे इअं हि देईसद्देण उवरीअदि; ण किंपि परिहीअदि सचीदो ओजस्सिदाए। (ट) (४५)

चित्र। अत्थि अवरं मुहं मंतिदुं दे?। (ठ) (४६)

देवी। अज्जउत्तं पुरोकदुअ कोवि वदविसेसो मए संपादणीओ; ता मुहुत्तअं उअरोधो सहीअदु। (ड)

राजा। माणवक! अनुग्रहः खलु उपरोधः। (४७)

---

(ज) जयति जयति आर्य्यपुत्रः।

(झ) जयति जयति देवः।

(ञ) स्वस्ति भवत्यै।

(ट) स्थाने इयं हि देवीशब्देन उपचर्य्यते; न किमपि परिहीयते शचीत ओजस्वितायाम्।

(ठ) अस्ति अपरं मुखं मन्त्रयितुं ते?।

(ड) आर्य्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया सम्पादनीयः; तन्मुहूर्त्तक-मुपरोधः सह्यताम्।

---

नादिमावभूषणा। व्रतेति।—व्रतेषु यः उपदेशः शिक्षा तेन उज्झिता गर्ववृत्तिर्येन। व्रताचरणेषु विनीतवृत्तिना भवितव्यमिति चिरन्तनसंस्कारेण त्यक्तगर्ववृत्तित्वात् वपुः प्रसन्नमिति तात्पर्य्यम्। गर्ववृत्तिस्तु देव्याः न स्वाभाविकी, परन्तु अपरस्त्रीप्रवणीभूते पत्युश्चित्ते पतिप्राणा स्त्रीभक्रोधवशाद्भविर्तैवोपलक्ष्यते। भक्त्या तु दैवं कर्म करणीयमतो हि व्रतनिमित्तमिदानीं देव्या तदपि उज्झितम्। भक्तिप्रवणं चेतस्तु क्षयाविशविवर्जितं स्यादेव। वंशस्थविलं वृत्तम्।

(४५) तेजोधैर्य्यगाम्भीर्य्यौदार्य्यसारल्यानां समष्टिः ओजः, तत्ता ओजस्विता।

(४६) त्वदर्थमेव देव्या ईदृशी दशा संवृत्ता, अत एतन्मन्त्रयितुं किन्तु-ऽन्यन्मुखमस्ति?।

(४७) माणवक! पश्य, देवी ब्रवीति भयम् उपरोधः।

विदू। ईदिसो णं सोत्थिबाअणं करंतो मम बहुसो उअरोधो भोदु। (ढ) (४८)

राजा। किंनामधेयमेतद्देव्या व्रतम् ?।

देवी। [निपुणिकामवलोकयति]।

चेटी। भट्टा-प्पिअप्पसादणं णाम। (ण) (४९)

राजा [देवीं विलोक्य]।—

अनेन कल्याणि ! मृणालकोमलं
व्रतेन गात्रं ग्लपयस्यकारणम्।
प्रसादमाकाङ्क्षति यस्तवोत्सुकः
स किं त्वया दासजनः प्रसाद्यते ?॥ (५०)

उर्व। [सवैलक्ष्यस्मितम्]। महंतो क्खु इमस्सिं एदस्स बहुमाणो। (त)

चित्र। अइ मुद्धे ! अस्ससंकंतप्पेमाणो णाअरा अहिअं दक्खिणा (५१) होंति। (थ)

---

(ढ) ईदृशो ननु स्वस्तिवाचनं कुर्वतो मम बहुश उपरोधो भवतु।

(ण) भर्तृप्रियप्रसादनं नाम।

(त) महान् खलु अस्मिन्नेतस्य बहुमानः।

(थ) अयि मुग्धे ! अन्यसङ्क्रान्तप्रेमाणो नागरा अधिकं दक्षिणा भवन्ति।

---

(४८) स्वस्तिवाचनिकं ददत्या देव्या मम सम्बन्धेऽपि ईदृशो बहुश उपरोधोऽनुष्ठीयताम्।

(४९) भर्तुः प्रियमभिलषितं तस्य प्रसादनम् आराधनम्।

(५०) कल्याणि ! अनेन व्रतेन मृणालकोमलं गात्रं, ते इति शेषः, अकारणं ग्लपयसि क्लेशयसि, त्वमिति शेषः। यः उत्सुकः उत्कण्ठितः आग्रहान्वितः सन् इत्यर्थः, तव प्रसादं प्रसन्नताम् आकाङ्क्षति, स दासजनः प्रसादाकाङ्क्षी जनः किं त्वया प्रसाद्यते ? आराध्यते ? यस्तव प्रसादाकाङ्क्षी तस्य प्रसादनं निष्प्रयोजनमिति भावः। वंशस्थविलं वृत्तम्।

(५१) दक्षिणा दक्षिणनायकवदतिप्रियभाषिण इत्यर्थः।

देवी। इमस्स वदस्स अअं प्पहाओ जं एत्तिअं बाधिदो (५२) अज्जउत्तो। (द)

विदू। विरमदु भवं; ण जुत्तं बंधुभासिदं पच्चाक्खादुं। (ध) (५३)

देवी। दारिआओ! (५४) आणेध उअहारअं, जाव हम्मगदे चंदवादे अच्चेमि। (न)

परिजनः। जं देई आणवेदि। एसो उअहारो। (प)

देवी। उवणेध। [नाट्येन कुसुमादिभिश्चन्द्रपादान् अभ्यर्च्य]। हंजे! इमेहिं उअहारेहिं मोदएहिं अज्जमाणवअं कंचुइं अ अच्चेध। (फ)

परिजनः। जं देई आणवेदि। अज्ज माणवअ! इदं उववादिदं सोत्थिवाअणिअं। (ब)

विदू। [मोदकशरावं गृहीत्वा]। सोत्थि भोदीए। बहुफलो एसो वदो भोदु। (भ)

---

(द) अस्य व्रतस्य अयं प्रभावो यदेतावद्बाधित आर्य्यपुत्त्रः।

(ध) विरमतु भवान्; न युक्तं बन्धुभाषितं प्रत्याख्यातुम्।

(न) दारिकाः! आनयत उपहारकं, यावत् हर्म्यगतांश्चन्द्रपादानर्चयामि।

(प) यद्देवी आज्ञापयति। एष उपहारः।

(फ) उपनयत। अयि! एभिरुपहारैर्मोदकैरार्य्यमाणवकं काञ्चुकिनं च अर्च्चयत।

(ब) यद्देवी आज्ञापयति। आर्य्य माणवक! इदमुपपादितं स्वस्तिवाचनिकम्।

(भ) स्वस्ति भवत्यै। बहुफलमेतत् व्रतं भवतु।

---

(५२) बाधितो वशीकृतः; मया तु एतद्व्रताचरणनिमित्तमिदानीम् आर्य्यपुत्त्रस्य उर्वशीचिन्तायामपि विघ्नमाचरितम्।

(५३) मदुक्तां स्वस्तिवाचनिककथामुपेक्ष्य भवतोऽन्यविधालापोऽनुचित एव। राजानं प्रति विदूषकस्यैवमुक्तिः।

(५४) दारिकाः कन्याः।

चेटी। अज्ज कंचुइ! इदं तुह। (म)

कञ्चुकी। [गृहीत्वा]। स्वस्ति देव्यै।

देवी। अज्जउत्त! इदो दाव। (य)

राजा। अयमस्मि।

देवी। [राज्ञः पूजामभिनीय, प्राञ्जलिः प्रणम्य च]। एसा देवदा-मिहुणं रोहिणी-मिअलंछणं सक्खीकदुअ अज्जउत्तं प्पसादेमि—अज्ज प्पहुदि अज्जउत्तो जं इत्थिअं कामेदि, जा अ अज्जउत्त-समागमप्पणइणी, ताए सह अप्पडिबंधेण वत्तिदव्वं। (र) (५५)

उर्व। अम्महे! ण जाणामि किंपरं से वअणं! मम उण बिस्सासबिसदं हिअअं संवुत्तं। (ल) (५६)

चित्र। सहि! महाणुभावाए पदिव्वदाए अब्भणुण्णादो अणंतराओ दे पिअसमागमो भविस्सदि त्ति। (व)

(म) आर्य्य कञ्चुकिन्! इदं तव।

(य) आर्य्यपुत्र! इतस्तावत्।

(र) एषा देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्य आर्य्यपुत्रं प्रसादयामि—अद्य प्रभृति आर्य्यपुत्रो यां स्त्रियं कामयते, या च आर्य्यपुत्रसमागम-प्रणयिनी, तया सह अप्रतिबन्धेन वर्त्तितव्यम्।

(ल) आश्चर्य्यम्! न जाने किंपरमस्या वचनम्! मम पुनर्विश्वासविशदं हृदयं संवृत्तम्।

(व) सखि! महानुभावया पतिव्रतया अभ्यनुज्ञातोऽनन्तरायस्ते प्रियसमागमो भविष्यतीति।

(५५) पतिदेवता हि स्त्रियः आत्मसुखनिरभिलाषिण्यः सत्यः पत्युः प्रिय-सम्पादनार्थं निजजीवनमपि परित्यक्तुं न पराङ्मुखीभवन्ति, ईदृशो हि तासां धर्मः। कुलीना पतिव्रता च देवी अपि तदेव पातिव्रत्यधर्ममनुसृत्य आत्मसुखाभिलाषं विहाय भर्तृसन्तोषार्थम् "आर्य्यपुत्रो यां कामयते" इत्याद्युक्तवती।

(५६) किम्परं किमधीनं, किमुद्दिश्य एषा एवं ब्रवीतीति तन्न जाने, मम तु एतद्वाक्यश्रवणेनैव हृदयं विश्वस्तं जातम्।

विदू । [ अपवार्य्य ] । छिसहत्थस्स पुरदो बज्झे पलाइदे भणादि, गच्छ, धम्मो भविस्सदि त्ति । [ प्रकाशम् ] । भोदि ! किं उदासीणो तत्थभवं ? । (श) (५७)

देवी । मूढ़ ! अहं क्खु अत्तणो सुहावसाणेण अज्जउत्तस्स सुहं इच्छामि ; एत्तिएण चिंतेहि दाव पिओ ण वेत्ति । (ष)

राजा ।—

दातुमसहने ! प्रभवस्यन्यस्यै कर्त्तुमेव वा दासम् ।
नाहं पुनस्तथा त्वयि यथा हि मां शङ्कसे भीरु ! ॥ (५८)

देवी । भोदु ; जधाणिद्दिट्ठं संपादिदं पिअप्पसादणव्वदं ; ता एध परिअणा ! गच्छम्ह । (स)

राजा । न खलु प्रसादितमपि प्रतिविहाय (५९) गम्यते ।

(श) छिन्नहस्तस्य पुरतो बध्ये पलायिते भणति, गच्छ, धर्मो भविष्यतीति । भवति ! किमुदासीनस्तत्रभवान् ? ।

(ष) मूढ़ ! अहं खलु आत्मनः सुखावसानेन आर्य्यपुत्रस्य सुखमिच्छामि ; एतन्मात्रेण चिन्तय तावत् प्रियो न वेति ।

(स) भवतु ; यथानिर्दिष्टं सम्पादितं प्रियप्रसादनव्रतम् ; तदेत परिजनाः ! गच्छामः ।

(५७) तत्रभवान् पूज्यो राजा किमद्यावधि त्वया उदासीनः कृतः ? संसारसुखविरतो हि उदासीनः । त्वया परित्यक्तो राजापि तथाविधो जात इति तात्पर्य्यम् ।

(५८) हे असहने ! कोपने ! प्रियस्य अन्यासक्तिसम्भावनामपि सोढ़ुमक्षमे ! अन्यस्यै स्त्रियै दातुं, मामिति शेषः प्रभवसि समर्थाऽसि, वा दासं, तवैवेति भावः, कर्त्तुमेव प्रभवसि पुनः किन्तु हे भीरु ! मां यथा शङ्कसे मन्यसे अहं त्वयि तथा न हि नैव, त्वं मामन्यासक्तमाशङ्क्य आत्मनि उपेक्षापरायणं मन्यसे, वस्तुतस्तु तथा न, अहं त्वयि समधिकादरप्रदर्शनपर एव इति भावः । आर्य्या वृत्तम् ।

(५९) प्रतिविहाय परित्यज्य ।

देवी। अज्जउत्त! अलंघिदपुण्णो संपदं णिअमो। (ङ) (६०)

[ इति सपरिजना निष्क्रान्ता ]।

उर्व। हला! पिअकलत्तो राएसी; ण उण हिअअं णिअत्तइदुं सक्कणोमि। (च) (६१)

चित्र। कधं त्थिरासो णिअत्तीअदि?। (क) (६२)

राजा। [ आसनमुपसृत्य ]। वयस्य! दूरं गता देवी?।

विदू। भण वीसत्थो जं सि वत्तुकामो; असाज्झो त्ति परिच्छिदिअ आदुरो विअ वेज्जेण अइरेण मुक्को तत्थभोदीए भवं। (ख) (६३)

राजा। अपि नामोर्वशी—"।

उर्व। [आत्मगतम्]। अज्ज कदत्था भवे। (ग) (६४)

---

(ङ) आर्यपुत्र! अलङ्घितपुण्यः साम्प्रतं नियमः।

(च) अयि! प्रियकलत्रो राजर्षिः, न पुनः हृदयं निवर्त्तयितुं शक्नोमि।

(क) कथं स्थिराशो निवर्त्यते?।

(ख) भण विश्वस्तो यदसि वक्तुकामः; असाध्य इति परिच्छिद्यातुर इव वैद्येन अचिरेण मुक्तस्तत्रभवत्या भवान्।

(ग) अद्य कृतार्था भवेत्।

---

(६०) व्रतचारिणी नियमवती स्यादेव, नियमविघाते तु पुण्यविघातः। अतस्तत् पुण्यविघातमुत्पाद्य इह स्थातुमधुना न शक्नोमि।

(६१) उर्वशी खलु देव्याः चरितं साक्षात् प्रत्यक्षीकृत्य सदर्थैव देव्या ईदृशमाचरितमिति विभाव्य च जातलज्जापि नृपतेः आत्महृदयनिवर्त्तने न समर्था।

(६२) अस्थिराशाया निवर्त्तनं वरमपि सम्भाव्यं, न पुनः स्थिराशाया इति भावः।

(६३) मदायत्तन्तु यत् किमपि औषधादिकमासीत्, तेनायमसाध्यः अतोऽधुना परित्याग एव वरमिति परिच्छिद्य विभाव्य।

(६४) उर्वशीति शेषः।

राजा ।—

गूढं नूपुरशब्दमात्रमपि मे कान्तं श्रुतौ पातयेत्
पश्चादेत्य शनैः करोत्पलवृते कुर्वीत वा लोचने ।
हर्म्येऽस्मिन्नवतीर्य्य साध्वसवशान्मन्दायमाना बला-
दानीयेत पदात् पदं चतुरया सख्या ममोपान्तिकम् ? ॥ (६५)

चित्र । हला उव्वसि ! इमं दाव से मणोरहं संपादेहि । (घ)

उर्व । [ससाध्वसम्] । कीड़िस्सं दाव । (ङ)

[इति पृष्ठेनागत्य राज्ञो लोचने संवृणोति] ।

चित्र । [विदूषकं संज्ञां लम्भयति] । (६६)

राजा । [स्पर्शं रूपयित्वा] । सखि ! न खलु नारायणोरुसम्भवा वरोरुः ? ।

विदू । कधं भवं अवगच्छदि ? । (च)

राजा । किमत्र ज्ञेयम् ?—

अन्यत् कथमिव पुलकैः कलितं मम गात्रकं करस्पर्शात् ? ।
नोच्छ्वसिति तपनकिरणैश्चन्द्रस्यैवांशुभिः कुमुदम् ॥ (६७)

---

(घ) अयि उर्वशि ! इमं तावदस्य मनोरथं सम्पादय ।

(ङ) क्रीड़िष्यामि तावत् ।

(च) कथं भवानवगच्छति ? ।

---

(६५) गूढं सशङ्कपदसञ्चारादविस्पष्टम् इत्यर्थः । साध्वसवशात् मन्दायमाना शङ्कालज्जादिजेन जाड्येन मन्थरगतिः इत्यर्थः । उपान्तिकं समीपम् । शार्दूलविक्रीड़ितं वृत्तम् ।

(६६) केयं राज्ञश्चक्षुरावृणोति, तन्मा प्रकाशय इति इङ्गितेन विदूषकं संज्ञां प्रापयति ।

(६७) अन्यत् अन्यथा, उर्वशीस्पर्शं विना इत्यर्थः । पुलकैः रोमाञ्चैः । कलितं व्याप्तम्, आक्रान्तमित्यर्थः । उर्वशीस्पर्शं विना ममायं पुलकः न सम्भवति इति भावः । आर्य्या वृत्तम् ।

उर्व। अम्महे! वज्जलेवघड़िदं विअ मे हत्थजुअलं ण समत्थाम्हि अवणेदुं। (क) (६८) [इति मुकुलिताक्षी चक्षुषो हस्तावपनीय ससाध्वसा तिष्ठति]।

राजा। [हस्ताभ्यां गृहीत्वा परिवर्त्तयति]।

उर्वशी। [कथञ्चिदुपसृत्य]। जेदु जेदु महाराओ। (ख)

चित्र। सुहं दे वअस्स!?। (ग)

राजा। नन्वेतदुपपन्नम्।

उर्व। हला! देईए दिण्णो महाराओ; अदो से प्पणयवदी विअ सरीरसंगदम्हि; मा क्खु मं पुरोभाइणि त्ति समत्थेहि। (घ) (६९)

विदू। कधं इह ज्जेव तुम्हाणं अत्थमिदो सूरो?। (ङ)

राजा। [उर्वशीमवलोक्य]।—

देव्या दत्त इति यदि व्यापारं व्रजसि मे शरीरेऽस्मिन्।
प्रथमं कस्यानुमते चोरितमयि! मे त्वया हृदयम्?॥ (७०)

(क) अहो! (आश्चर्यम्!) वज्रलेपघटितमिव मे हस्तयुगलं न समर्थास्मि अपनेतुम्।

(ख) जयति जयति महाराजः।

(ग) सुखं ते वयस्य!?।

(घ) अयि! देव्या दत्तो महाराजः; अतोऽस्य प्रणयवतीव शरीरसङ्गतास्मि; मा खलु मां पुरोभागिनीति समर्थय।

(ङ) कथमिहैव युवयोरस्तमितः सूर्यः?।

(६८) राज्ञो देहस्पर्शादात्मदेहस्यावशत्वं सूचितम्।

(६९) सर्वकर्मसु अग्रगामित्वं पुरोभागित्वम्। अत्र तु विना वार्त्तया आत्मना अस्य शरीरसङ्गतत्वादहं पुरोभागिनी संवृत्ता, तन्न। "हीनलज्जाः स्त्रियः शोच्याः" इति भावः।

(७०) देव्या दत्त इति यदि अस्मिन् शरीरे व्यापारं व्रजसि अनुमतिमिति

चित्र। वअस्स! निरुत्तरा एसा। मम संपदं विसत्तिं सुणीअदु। (ठ)

राजा। अवहितोऽस्मि।

चित्र। वसंताणंतरं उसुसमए भअवं सुज्जो मए उवअरिदव्वो; ता जधा इअं मे पिअसही सग्गस्स ण उक्कंठेदि, तहा वअस्सेण कादव्वं। (ड) (७१)

विदू। किं वा सग्गे सुमरिदव्वं? ण तत्थ खाईअदि, ण वा पीअदि, केवलं अणिमिसेहिं अच्छीहिं मीणदा अवलंबीअदि। (ढ)

राजा। वयस्य!—

अनिर्देश्यसुखं स्वर्गं कथं विस्मारयिष्यते?।
अनन्यनारीसामान्यो दासस्त्वायं पुरूरवाः॥ (७२)

चित्र। अणुग्गहिदम्हि। हला उव्वसि! अकादरा भविअ विसज्जेहि मं। (ण)

---

(ठ) वयस्य! निरुत्तरा एषा। मम साम्प्रतं विज्ञप्तिः श्रूयताम्।

(ड) वसन्तानन्तरम् उष्णसमये भगवान् सूर्यो मया उपचरितव्यः; तत् यथा इयं मे प्रियसखी स्वर्गस्य न उत्कण्ठते तथा वयस्येन कर्त्तव्यम्।

(ढ) किं वा स्वर्गे स्मर्त्तव्यम्? न तत्र खाद्यते, न वा पीयते, केवलमनिमिषैरक्षिभिर्मीनता अवलम्ब्यते।

(ण) अनुगृहीतास्मि। अयि उर्वशि! अकातरा भूत्वा विसर्जय माम्।

---

यदि आलिङ्गनादिकं करोषि, तत् कस्य अनुमतिः प्रागेव मे हृदयं त्वया हृतमिति भावः। आर्य्या वृत्तम्।

(७१) उष्णसमये ग्रीष्मकाले। वयस्येन सख्या भवता इत्यर्थः। ग्रीष्मकाले सूर्य्योपस्थानं मया कर्त्तव्यम्, अतः सखीसन्दर्शनार्थमागन्तुं न शक्ष्यामि, अस्मद्दर्शनजोत्कण्ठा अस्याः सर्वदा एकत्रावस्थानादिना दूरीकरणीया इति भावः।

(७२) अनन्यनारीसामान्यः अन्यनारीषु यथाहं सामान्यः तथा न, अर्थात् सर्वासु यथा समभावत्वेन वर्त्तामहे, तथा त्वयि न। त्वयि तु विशेषप्रणयवान्

उर्व। [ चित्रलेखां परिष्वज्य सकरुणम् ]। सहि! मा क्खु मं विसुमरेसि। (त)

चित्र। [ सस्मितम् ]। वअस्सेण संगदा तुमं मए एव्वं जाचिदव्वा। (थ) (७३)

[ इति राजानं प्रणम्य निष्क्रान्ता ]।

विदू। दिट्ठिआ मणोरहसिद्धीए वड्ढदु भवं। (द)

राजा। इमां तावत् मनोरथसिद्धिं पश्य।—

सामन्तमौलिमणिरञ्जितपादपीठ-
मेकातपत्रमवनेर्न तथा प्रभुत्वम्।
अस्याः सखे! चरणयोरहमद्य कान्त-
माज्ञाकरत्वमधिगम्य यथा कृतार्थः॥ (७४)

उर्व। णत्थि मे बाआ विहवो अदो अवरं मंतिदुं। (ध)

राजा। [ उर्वशीं हस्तेन अवलम्ब्य ]। अहो! अविरुद्धसंवर्द्धनमेतदिदानीमीप्सितलम्भानाम्। (७५) यतः।—

(त) सखि! मा खलु मां विस्मरिष्यसि।

(थ) वयस्येन सङ्गता त्वं मया एवं याचितव्या।

(द) दिष्ट्या मनोरथसिद्ध्या वर्द्धतां भवान्।

(ध) नास्ति मे वाचा विभवोऽतोऽपरं मन्त्रयितुम्।

दासवदुपचरिष्यामि च. अतः किञ्चिन्नास्ति मे शक्तिः। एतन्मात्रविभवेण सुखपूर्णस्वर्गविस्मारणे कथमहं क्षमः स्याम्? इति तात्पर्य्यम्। अनुष्टुप् वृत्तम्।

(७३) वयस्यसङ्गतायास्त्वेवं सम्भाव्यते न पुनर्मम।

(७४) प्रभुत्वमपि प्राप्य तथा नाहं कृतार्थः, यथास्या आज्ञाकरत्वं प्राप्य। वसन्ततिलकं वृत्तम्।

(७५) ईप्सितप्रापकाणां चन्द्रपादादीनामातिशय्यमिदानीं न विरुद्धम्। काङ्क्षितमेलकत्वात्तेषाम् आतिशय्यमिदानीं मे सुखकरमेव, न तत्सम्बन्धे विरुद्धमिति भावः।

पादास्त एव शशिनः सुखयन्ति गात्रं
बाणास्त एव मदनस्य मनोऽनुकूलाः।
संरम्भरूक्षमिव सुन्दरि! यद्यदासीत्
त्वत्सङ्गमेन मम तत्तदिवानुनीतम्॥ (७६)

उर्व। अवरद्धाम्हि चिरआरिआ महाराअस्स। (न)

राजा। सुन्दरि! मा मैवम्।—

यदेवोपनतं दुःखं सुखं तद्धि रसान्तरम्।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः॥ (७७)

विदू। भोदि! सेबिदा पदोसरमणीआ चंदबादा, ता समओ क्खु दे गेहप्पवेसस्स। (प)

राजा। तेन हि सख्या मार्गमादेशय।

विदू। इदो इदो भोदी। (फ)

[इति परिक्रामन्ति]।

राजा। सुन्दरि! इयमिदानीं मे प्रार्थना।

उर्व। कीरिसी सा?। (ब)

राजा। अनधिगतमनोरथस्य पूर्वं
शतगुणितेव गता मम त्रियामा।

(न) अपराद्धास्मि चिरकारिका महाराजस्य।

(प) भवति! सेविताः प्रदोषरमणीयाश्चन्द्रपादाः, तत् समयः खलु ते गृहप्रवेशस्य।

(फ) इत इती भवती।

(ब) कीदृशी सा?

(७६) पादाः किरणाः। संरम्भरूक्षं रोषदारुणम्। अनुनीतं कृतसान्त्वनमिव। वसन्ततिलकं वृत्तम्।

(७७) रोगमुक्तो हि उपशमसुखमनुभवति; चिरमरोगी कथं तदवगच्छति? अनुष्टुप् वृत्तम्।

यदि तु तव समागमे तथैव
प्रसरति सुभ्रु ! ततः कृती भवेयम् ॥ ( ७८ )

[ इति निष्क्रान्ताः सर्वे ]।

इति तृतीयोऽङ्कः ।

---

# चतुर्थोऽङ्कः ।

[ नेपथ्ये सहजन्या-चित्रलेखयोः प्रावेशिकी आचिप्तिका ]। ( १ )—

पिअसहि-विओअ-विमणा सहिसहिआ वाउला समुल्लवइ ।
सूरकर-फंस-विअसिअ-तामरसे सरवरुस्संगे । (क) (२)

---

( क ) प्रियसखी-वियोग-विमनाः सखीसहिता व्याकुला समुल्लपति ।
सूर्य्यकरस्पर्शविकसिततामरसे सरोवरोत्सङ्गे ॥

---

( ७८ ) हे सुभ्रु ! अनधिगतः अप्राप्तः अपूर्ण इति यावत्, मनोरथः अभिलाषो यस्य तथाभूतस्य मम त्रियामा प्रहरत्रयसमन्विता रात्रिः शतगुणितेव शतप्रहरसमन्वितेव गता। विरहवेदनाविधुरेण मया रात्रिः कष्टेन यापिता, सुतरां वर्द्धितयामेव आसीत् इत्यर्थः। इदानीं तव समागमे यदि तु तथैव शतगुणितेव प्रसरति गच्छति ततः कृती कृतार्थो भवेयम्। पुष्पिताग्रा वृत्तम्।

---

( १ ) प्रावेशिकी रङ्गप्रवेशसंसूचिका, आचिप्तिका गीतिविशेषः। तदुक्तम्,—

"नानारसार्थयुक्ता नृणां या गीयते प्रवेशेषु ।
प्रावेशिकी तु नाम्ना विज्ञेया सा ध्रुवा तज्ज्ञैः ॥"
"चच्चत्पुटादितालेन मार्गत्रयविभूषिता ।
आचिप्तिका स्वरपदग्रथिता कथिता बुधैः ॥" इति ।

( २ ) नवोदितसूर्य्यकरस्पर्शविकसिततामरसे सरोवरोत्सङ्गे सखीसहितापि प्रियसखीवियोगविमनाः, अत एव व्याकुला, हंसीति शेषः; समुल्लपति विरौति। हंसीच्छलतः सहजन्यासहितायाश्चित्रलेखायाः प्रवेशः सूच्यते। हंसीपचे वर्णितगुणं सरो

[ ततः प्रविशति सहजन्या चित्रलेखा च ]।

चित्र। [ प्रवेशानन्तरं द्विपदिकया दिशोऽवलोक्य ]। ( ३ )—

सहअरि-दुक्खालिद्धअं सरवरअम्हि सिणिद्धअं।

वाहो वग्गिअ-णअणअं तम्मइ हंसीजुअलअं ॥ (ख) ( ४ )

सह। [ सखेदम् ]। सहि चित्तलेहे! मिलाअमाणसअ-वत्तकसणा दे मुहच्छाआ हिअअस्स असुत्थदं सूचेदि ; ता कहेहि मे अणिव्विदिकारणं, जेण दे समाणदुक्खा होमि। (ग)

चित्र। सहि! अच्छरा-वावारपज्जाएण तत्थभअदो सुज्जस्स उअत्थाणे वट्टंती पिअसहीए विणा वस्संतसमओ ( ५ ) आअदो त्ति वलिअं उक्कंठिदाम्हि। ( घ )

---

( ख ) सहचरीदुःखालीढकं सरोवरे स्निग्धकम्।

वाष्पावल्गितनयनकं ताम्यति हंसीयुगलकम् ॥

( ग ) सखि चित्रलेखे! म्लायमानशतपत्रकषा ते मुखच्छाया हृदयस्य असुस्थतां सूचयति ; तत् कथय मे अनिर्वृतिकारणं येन ते समानदुःखा भवामि।

( घ ) सखि! अप्सरोव्यापारपर्य्यायेण तत्रभवतः सूर्य्यस्य उपस्थाने वर्त्तमाना प्रियसख्या विना वर्षत्समय आगत इति बलवदुत्कण्ठितास्मि।

---

यथा सुखजनकमपि विरहितत्वात् केवलं दुःखाय, तद्वत् चित्रलेखापक्षे वर्षासमयोऽपि प्रियसखीविरहितत्वात् दुःखकारणं जातम्। प्रियवस्तु प्रियसङ्गतस्य सुखाय भवति, विरहितस्य तु तदेव दुःखाय जायते इति भावः। गाथाच्छन्दः ; तल्लक्षणं यथा पिङ्गले,—

"पढमं बारहमत्ता, बीए अट्ठार होंहिं संजुत्ता।

जह पढमं तह तीअं दहपञ्चविहूसिआ गाहा॥" इति।

( ३ ) द्विपदिका,—"शुद्धा खण्डा च मात्रा च सम्पूर्णेति चतुर्विधा। भवेद्विपदिका गीतिर्भरतेन प्रकीर्त्तिता॥ भवेत् चतुर्भिश्चरणैस्त्रयोदशकलात्मकैः॥" इत्युक्तलक्षणगीतिविशेषः। कला मात्रा। द्विपदिकया दिशोऽवलोक्य दिगवलोकन-काले प्रायशो द्विपदिका व्यवह्रियते।

( ४ ) यद्दृष्टा नयनं स्निग्धं भवति, तदेव स्निग्धकम्।

( ५ ) वर्षत्समयः वर्षाकालः।

सह। सहि! जाणामि बो अखोखगदं पेम्मं; तदो तदो?। (ङ)

चित्र। तदो इमेसुं दिअसेसुं को णबो बुत्तंतो बट्टदि त्ति प्पणिधाणट्ठिदाए मए अच्चाहिदं उअलद्धं। (च)

सह। सहि! कीरिसं तं?। (छ)

चित्र। [सकरुणम्]। उव्बसी किल तं राएसिं लच्छीसणाहं गेण्हिअ अमच्चेसु णिबेसिदरज्जधुरं (६) केलाससिहरुद्देसे गंधमादणबणं बिहरिदुं गदा। (ज)

सह। [सश्लाघम्]। सहि! सो संभोओ, जो तारिसेसु प्पदेसेसु; (७) तदो तदो?। (झ)

चित्र। तदो तहिं मंदाइणीतीरे सिकदापव्बदेहिं (८) कीलमाणा उदअवती णाम बिज्जाहरदारिआ तेण राएसिणा खणं णिज्झाइदेत्ति कदुअ कुबिदा मे पिअसही उव्बसी। (ञ)

(ङ) सखि! जानामि युवयोरन्योऽन्यगतं प्रेम; ततस्ततः?।

(च) तत एषु दिवसेषु को नवो वृत्तान्तो वर्त्तते इति प्रणिधानस्थितया मया अत्याहितमुपलब्धम्।

(छ) सखि! कीदृशं तत्?।

(ज) उर्वशी किल तं राजर्षिं लक्ष्मीसनाथं गृहीत्वा अमात्येषु निवेशित-राज्यधुरं कैलासशिखरोद्देशे गन्धमादनवनं विहर्त्तुं गता।

(झ) सखि! स सम्भोगः, यः तादृशेषु प्रदेशेषु; ततस्ततः?।

(ञ) ततश्च मन्दाकिनीतीरे सिकतापर्वतैः क्रीड़न्ती उदकवती नाम विद्याधरदारिका तेन राजर्षिणा क्षणं निध्यातेति कृत्वा कुपिता मे प्रियसखी उर्वशी।

(६) लक्ष्मीनावसनाथं न तु अन्यसपत्नीसहितमिति तात्पर्य्यम्। अमात्येषु निवेशितराज्यधुरं निश्चिन्तमिति यावत्।

(७) भवतीति शेषः। गन्धमादनवनस्यातिमनोहरत्वान्निर्जनत्वाच्च तत्र सम्भोगोऽतिसुखकर इति भावः।

(८) सिकतापर्वतैर्वालुकानिर्मितकृत्रिमपर्वतैः।

सह। असहणा क्खु सा ; दुराहृढ़ो अ से प्पणओ ; ता भविदव्वदा एत्थ बलवदी ; तदो तदो ?। (ट)

चित्र। तदो सा भत्तुणो अणुणअं अप्पडिवज्जमाणा गुरुसावसंमूढ़हिअआ बिसुमरिद-देवदाणिअमा कस्सआजण-परिहरणिज्जं कुमालवणं पविट्ठा ; पवेसाणंतरं अ काणणो-वंतवत्तिलदाभावेण परिणदं से रूवं। (ठ) (९)

सह। [सशोकम्]। सव्वधा णत्थि बिहिणो अलंघणीअं णाम, जेण तारिसस्स रूवस्स असारिसो ज्जेव परिणामो संवुत्तो ; तदो तदो ?। (ड)

चित्र। तदो सो बि तस्सिं ज्जेव काणणे पिअसहीं असेस-अंतो उम्मत्तीभूदो "इदो उव्वसी तदो उव्वसी" त्ति कदुअ अहोरत्ताइं अदिवाहेदि। [नभसोऽवलोक्य]। एदिणा उण णिव्विदाणं पि उक्कंठाआरिणा मेहोदएण अप्पदीआरो भविस्सदि त्ति तक्केमि। (ढ) (१०)

(ट) असहना खलु सा ; दूरारूढ़श्चास्याः प्रणयः ; तस्माद्भवितव्यता अत्र बलवती ; ततस्ततः ?।

(ठ) ततः सा भर्त्तुरनुनयमप्रतिपद्यमाना गुरुशापसम्मूढ़हृदया विस्मृतदेवता-नियमा कन्यकाजनपरिहरणीयं कुमारवनं प्रविष्टा ; प्रवेशानन्तरञ्च काननोपान्त-वर्त्तिलताभावेन परिणतमस्या रूपम्।

(ड) सर्वथा नास्ति विधेरलङ्घनीयं नाम, येन तादृशस्य रूपस्य अन्यादृश एव परिणामः संवृत्तः ; ततस्ततः ?।

(ढ) ततः सोऽपि तस्मिन्नेव कानने प्रियसखीमन्विष्यन् उन्मत्तीभूतः "इत उर्वशी तत उर्वशी" इति कृत्वा अहोरात्राण्यतिवाहयति। एतेन पुनर्निर्वृतानामपि उत्कण्ठाकारिणा मेघोदयेन अप्रतीकारो भविष्यतीति तर्कयामि।

(९) ततः सा भर्त्तुरनुनयमित्यादि।—भर्त्तुः स्वामिनः। अनुनयं प्रसादनो-पयोगि चाटुवचनम् इत्यर्थः। अप्रतिपद्यमाना अगृह्णन्ती। गुरोर्भरतस्य शापेन सम्मूढ़-

[ अवान्तरे जम्भलिका ]। (११)

सहअरि-दुक्खालिद्धअं सरवरअम्हि सिणिद्धअं।
अविरल-बाहजलोल्लअं तम्मइ हंसीजुअलअं॥ (ण) (१२)

सह। सहि! अत्थि को वि समागमोबाओ ?। (त)

चित्र। गोरीचरण-राअसंभवं संगममणिं वज्जिअ कुदो से समागमोबाओ ?। (थ)

सह। ण ईदिसा आकिदिबिसेसा चिरं दुक्खभाइणो होंति; ता अवस्सं को वि अणुग्गहणिमित्तभूओ समागमोबाओ भविस्सदि त्ति तक्केमि; [ प्राचीं दिशं विलोक्य ]। ता एहि उदआहिवस्स (१३) भअवदो सुज्जस्स उवत्थाणं करेम्ह। (द)

(ण) सहचरी-दुःखालीढ़कं सरोवरे स्निग्धकम्।
अविरलवाष्पजलोक्षकं ताम्यति हंसीयुगलकम्॥

(त) सखि! अस्ति कोऽपि समागमोपायः ?।

(थ) गौरीचरणरागसम्भवं सङ्गममणिं वर्जयित्वा कुतोऽस्याः समागमोपायः ?।

(द) नेदृशा आकृतिविशेषाश्चिरं दुःखभागिनो भवन्ति; तदवश्यं कोऽपि अनुग्रहनिमित्तभूतः समागमोपायो भविष्यतीति तर्कयामि; तदेहि उदयाधिपस्य भगवतः सूर्य्यस्य उपस्थानं कुर्वः।

हृदया कन्यकाजनपरिहरणीयं निषिद्धस्त्रीजनगमनं कुमारवनं कुमारस्य कार्त्तिकेयस्य तपोवनं प्रविष्टा।

(१०) "मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः" इति मेघदूतम्।

(११) अवान्तरे जम्भलिका। जम्भलिकालक्षणं यथा भरतः,—"शुद्धा द्विपदिका गीतिः सैव जम्भलिकोच्यते।"

(१२) सहचर्य्या दुःखेन आलीढ़कम् आक्रान्तम्। स्निग्धकं स्नेहप्रवणं, स्निग्धकान्ति इत्यर्थो वा। ताम्यति क्लिश्यति।

(१३) नेदृशा आकृतिविशेषा इत्यादि।—ईदृशा आकृतिविशेषाः चिरं दुःखभागिनो न भवन्ति एवंविधसुलक्षणाक्रान्तः सुपुरुषः स महाराजः चिरं न

[ अवान्तरे खण्डधारः ] । (१४)—

चिंताद्म्मिअमाणसिआ सहअरि-दंसणलालसिआ ।
विअसिअ-कमल-मणोहरए विहरइ हंसो सरवरए ॥ (ध)(१५)

[ इति निष्क्रान्ते ] ।

[ प्रवेशकः ] । (१६)

[ नेपथ्ये पुरूरवसः प्रावेशिकी आक्षिप्तिका ] ।—

गहणं गइंदणाहो पिअ-विरहुम्माअ-पअलिअ-विआरो ।
विसइ तरु-कुसुम-किसलअ-भूसिअ-णिअदेह-पब्भारो ॥
(न) (१७)

(ध) चिन्तादूनमानसिका सहचरीदर्शनलालसिका ।
विकसितकमलमनोहरे विहरति हंसो सरोवरे ॥

(न) गहनं गजेन्द्रनाथः प्रियाविरहोन्मादप्रकटितविकारः ।
विशति तरुकुसुमकिसलयभूषितनिजदेहप्राग्भारः ॥

विरहव्यथामनुभवेत्, ईदृशी सुरूपा उर्वशी च चिरमेवमवस्थां नैव सहेतेति तर्कयामि इत्यर्थः । उदयाधिपस्य उदयपर्वतस्याधिपस्य ।

(१४) अवान्तरे खण्डधारा । तल्लक्षणं यथाह भरतः,—"चतुर्दशकलायुक्तैश्चतुर्भिश्चरणैरिह । खण्डाख्या द्विपदी गीतिः खण्डधाराऽपि सा भवेत् ॥" यद्वा—"यद्गीतं गुणकार्या च रागेण क्रीड़केन च । तालेन सा खण्डधारा यष्टिकेन प्रकाशिता ॥" इति ।

(१५) चिन्तया दूनं सन्तप्तं मानसकं चित्तं यस्याः सा चिन्ताक्लिष्टमानसा ।

(१६) प्रवेशक इति ।—प्रवेशकलक्षणं यथा दर्पणे,—"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥" इति ।

(१७) गहनं गजेन्द्रनाथ इत्यादि ।—गजेन्द्रनाथः प्रियायाः विरहेण वियोगेन यः उन्मादः मत्तता तेन प्रकटितः सुस्पष्टं प्रकाशितः विकारो मनसः प्रकृतिव्यतिक्रमो यस्य सः । तरुभिः खण्डितत्वचकैः कुसुमैः किसलयैश्च भूषितः निजदेहस्य प्राग्भारः परभागः, उपरिदेश इत्यर्थः, पृष्ठदेश इति यावत्, येन सः । "प्राग्भार उत्कर्षे परभागे पर्वताग्रभागे च" इति वाचस्पत्यम् । अत्रापि गजच्छलेन पुरुरवा आक्षिप्यते । सोऽपि वातुलत्वात् पुष्पादिविभूषितनिजदेह इति तात्पर्य्यम् ।

[ ततः प्रविशति श्राकाशबद्धलक्ष्यः सोन्मादो राजा ]।

राजा। [ सक्रोधम् ]। श्राः दुरात्मन् रक्षः! तिष्ठ तिष्ठ, मम प्रियतमाम् श्रादाय क्व गच्छसि ? [ विलोक्य ]। हन्त! कथं शैलशिखरात्गगनमुत्पत्य बाणैर्मामभिवर्षति! [ इति लोष्टं गृहीत्वा हन्तुं धावन्, अनन्तरे द्विपदिकया दिशोऽवलोक्य ]।—

हिअआहिअ-पिअदुक्खओ सरवरए धुदपक्खओ।
वाह्रो-वग्गिअ-णअणओ तम्मइ हंसजुआणओ॥ (प) (१८)

[ विभाव्य सकरुणम् ]। कथम्!—

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः!
सुरधनुरिदं दूराकृष्टं न नाम शरासनम्!।
अयमपि पटुर्धारासारो न बाणपरम्परा!
कनकनिकषस्निग्धा विद्युत् प्रिया मम नोर्वशी!॥ (१९)

[ इति मूर्च्छितः पतति। पुनर्द्विपदिकया उत्थाय निश्वस्य ]।—

मइ जाणिअं मिअलोअणिं णिसिअरु कोवि हरइ।
जाव णु णवतलि-सामल-धाराहरु वरिसेइ॥ (फ) (२०)

[ इति सकरुणं विचिन्त्य ]। तत् खलु क्व नु गता स्यात्?।

(प) हृदयाहितप्रियादुःखकः सरोवरे धुतपक्षकः।
वाष्पावल्गितनयनकस्ताम्यति हंसयुवकः॥

(फ) मया ज्ञातं मृगलोचनां निशाचरः कोऽपि हरति।
यावत् नु नवतड़िच्छ्यामलो धाराधरो वर्षति॥

(१८) हृदयाहितेत्यादि।—हृदये मनसि आहितं सन्निधापितं रक्षितमिति यावत्, प्रियायाः दुःखं विपत्तिरूपं येन सः। धुतपक्षकः सञ्चालितपक्षः। "व्याधाप-वल्गितनयनः" इति पाठग्रहे—व्याधत्रासितनेत्रः।

(१९) सन्नद्धः उदितः। दूराकृष्टं सुविस्तृतम्। पटुः प्रबलः। धाराणां वृष्टिधाराणाम् आसारः सम्पातः। कनकस्य सुवर्णस्य निकषः सुवर्णपरीक्षोपयोगी उपलविशेषः। हरिणी वृत्तम्।

(२०) मृगलोचनाम् उर्वशीम्। नवः नूतनः, तड़िच्छ्यामलः विद्युता सह

क्वापि—

तिष्ठेत् कोपवशात् प्रभावपिहिता ? दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेत् ? मयि पुनर्भावार्द्रमस्या मनः।

[ सरोषम् ]।—

तां हर्त्तुं विबुधद्विषोऽपि हि न मे शक्ताः पुरोवर्त्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः! ॥ (२१)

[ दिग्विदिकया दिशोऽवलोक्य निश्वस्य सास्रम् ]। अहो! अपरावृत्तभागधेयानां दुःखं दुःखानुबद्धमेव। (२२) कुतः ?—

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे।
नववारिधरोदयादहोभिर्भवितव्यञ्च निरातपत्वरम्यैः ॥ (२३)

[ अनन्तरे चर्चरी ]। (२४)

---

युक्तः श्यामलः कृष्णवर्णः, धाराधरो मेघः। विद्युत्प्रभोद्दीप्तिते नवीनजलधरे राक्षसहस्तगतोर्वशीभ्रमः। मन्ये "जाव ण" इत्यत्र "जाव ण" इति पाठ आसीत्, लिपिप्रमादात् "णु" इति सञ्जातः। "ण" इति पाठे—यावत् नवतड़िच्छ्यामलो धाराधरो न वर्षति तावत् मया ज्ञातं कोऽपि निशाचरः मृगलोचनां हरति इत्यन्वयः।

(२१) तिष्ठेत् कोपवशादित्यादि।—प्रभावेण तिरस्करणीविद्याप्रभावेण पिहिता आच्छादिता। अस्या मनः हृदयं मयि भावेन अनुरागेण आर्द्रं स्निग्धम्। शार्दूलविक्रीड़ितं वृत्तम्।

(२२) अहो! अपरावृत्तेत्यादि।—अपरावृत्तम् अप्रतिनिवृत्तं भागधेयं सौभाग्य येषाम्। केवलं भाग्यपदोल्लेखेन सौभाग्यमेवाक्षिप्यते। भाग्येनैतत् सम्भवतीत्यादिवत्। दुःखं दुःखेन दुःखान्तरेण अनुबद्धम् अनुस्यूतं युक्तम् इत्यर्थः; दुःखं दुःखान्तरानुषङ्गि इति यावत्।

(२३) अयमेकपदे इत्यादि।—एकपदे सपदि ("तत्समैकपदे तुल्ये सद्यः सपदि च स्मृतम्" इति हलायुधः)। तया प्रियया अयं सुदुःसहो वियोगः विरहः उपनतः उपस्थितः। तथा नववारिधरोदयात् नवमेघोदयात् अहोभिः दिवसैः निरातपत्वरम्यैः रौद्राभावमनोहरैश्च भवितव्यम्। सम्भोगार्हे जलदसमये प्रियाविरहः नितरां दुःसह इति भावः। मालभारिणी वृत्तम्।

(२४) चर्चरीति गीतिविशेषसंज्ञा। तदुक्तं यथा—"द्रुतमध्यलयं समाश्रिता

जलहर ! संहर एह कोवं मइ आसत्तओ
अविरल-धारासाराक्कंत-दिसामुहओ ।
अए ! मइ पुहविं भमंते जइ पिअं पेक्खिहिमि
तआ जं जं करोहिसि तं तं सहोहिमि ॥ (ब) (२५)

[ चर्चरिकया विचिन्त्य ]। वृथा खलु मया मनसः सन्तापवृद्धिरुपेक्ष्यते । यदा मुनयोऽप्येवं व्याहरन्ति—'राजा कालस्य कारणम्' इति, तत् किमहमिनं जलधरसमयं न प्रत्यादिशामि ? (२६) [ विहस्य उत्थाय, "यदा मुनयोऽप्येवं व्याहरन्ति" इति पुनः पठित्वा ]। भवतु प्रत्यादिशामि ।

[ अनन्तरे चर्चरी ]।—

गंधुम्माइअ महुअर-गीएहिं
वज्जंतेहिं परहुअतूरेहिं ।
पसरिअ-पवणुव्वेल्लिअ-पल्लव-णिअरू
सुललिअ-विविहपआरेहिं णच्चइ कप्पतरू (भ) (२७)

---

( ब ) जलधर ! संहर अव कोपं मया आज्ञप्तकः
अविरलधारासाराक्रान्तदिङ्मुखः ।
अयि ! अहं पृथिवीं भ्रमन् यदि प्रियां प्रेक्षिष्ये
तदा यद्यत् करिष्यसि तत्तत् सहिष्ये ॥

---

पठति प्रेमभरान्नटी यदि । प्रतिमण्ठक-रासकेन वा द्रुतमध्या प्रथमा हि चर्चरी ॥" इति । प्रतिमण्ठकः सोमकालः । रासकेन इति ।—"लघ्वादितालो लोकेऽसौ रास इत्यभिधीयते" इति ।

( २५ ) जलधरेति ।—कोपम् अविरलधारावर्षणरूपं प्रबलवेगमित्यर्थः । मया आज्ञप्तः मदादिष्टः ममादेशेनेत्यर्थः । यदा प्रियां प्राप्स्यामि तदा तव ईदृशं कार्य्यं सहिष्ये, अन्यथा न इति भावः ।

( २६ ) वृथा खलु इति ।—अकारणमेव मे मनसः सन्तापो वर्द्धते, यतः कालानां राजाधीनत्वात् ; अयमहं जलधरसमयस्य निवारणे समर्थ इत्यर्थः । न प्रत्यादिशामि निवर्त्तयामीति भावः ।

[ तेन नर्त्तित्वा ]। अथवा न प्रत्यादिशामि ; यत् प्रावृषेण्यैरेव चिह्नैः सम्प्रति मम महाराजोपचारः क्रियते। (२८) [ विहस्य पुनः "गंधुन्माइअ" इति पठित्वा ]। कथमिति ?—

विद्युल्लेखा-कनकरुचिरश्री वितानं ममाभ्रं
व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि।
घर्मच्छेदात् पटुतरगिरो वन्दिनो नीलकण्ठा
धारासारोपनयनपरा नैगमाश्चाम्बुवाहाः॥ (२९)

[ पुनश्चर्चरी ]। भवतु, किं परिच्छदश्लाघया ? यावदस्मिन् कानने प्रियां प्रनष्टामन्वेषयामि। (३०)

---

( अ ) गन्धोन्मादित-मधुकरगीतैर्वाद्यमानैः परभृततूर्य्यैः।
प्रसृतपवनोद्वेल्लित-पल्लवनिकरः सुललितविविधप्रकारैः नृत्यति कल्पतरुः॥

---

( २७ ) गन्धोन्मादितेत्यादि।—परेण भ्रियन्ते इति परभृताः कोकिलाः त एव तूर्य्याणि तैः। गीतैस्तूर्य्यैरित्युपलक्षणे तृतीया।

( २८ ) अथवा न प्रत्यादिशामीत्यादि।—प्रावृषेण्यैः प्रावृट्कालभवैः चिह्नैः मेघविद्युल्लेखाधारासारादिभिः। महाराजोपचारः महाराजोपासनोपयुक्तः चामर-व्यजनादिरूपः सेवाविशेष इत्यर्थः।

( २९ ) तानेव वर्णयति, विद्युल्लेखेत्यादि।—विद्युल्लेखया कनकस्येव कषणोपलाङ्कितस्य स्वर्णस्येव रुचिरा मनोज्ञा श्रीर्यस्य तत् तथाभूतम् अभ्रं मेघः मम वितानं चन्द्रातपः, तथा निचुलतरुभिर्वेतसवृक्षैः मञ्जरीरूपचामराणि व्याधूयन्ते। घर्मच्छेदात् ग्रीष्मात्ययात् ("घर्मः स्यादातपे ग्रीष्मेऽप्युष्मस्वेदाम्भसोरपि" इति मेदिनी)। पटुतरगिरः सुस्पष्टभाषिणो नीलकण्ठाः मयूरा मम वन्दिनः स्तुतिपाठकाः; तथा धारासाराणां वृष्टिजलधाराणामुपनयने परा अम्बुवाहाः मेघाः नैगमाः वणिजः; यथा वणिजः धनरत्नाद्युपहारेण राजानमुपतिष्ठन्ते तद्वदेतेऽपि जलधराः धारावर्ष-रूपोपहारेण मामुपतिष्ठन्ते इत्यर्थः। यथैते बहुभिरुपचारैर्मामुपतिष्ठन्ते तथा न युक्तः प्रावृट्कालप्रत्यादेश इति भावः। मन्दाक्रान्ता वृत्तम्।

( ३० ) भवतु, किं परिच्छदेत्यादि।—परिच्छदस्य राजोचितपरिजनस्य श्लाघा अहङ्कारः तया ; राजानं माम् एते उपतिष्ठन्ते इत्यादिभिः वृथाऽहङ्कारैरलम् इत्यर्थः।

[ पाठस्थान्तरे भिन्नक: ]। (३१)—

दइआ-रहिओ अहिअं दुहिओ
बिरहाणुगओ परिमंथरओ।
गिरिकाणणए कुसुमुज्जलए
गअजूहवई तह भीणगई॥ (म) (३२)

[ अनन्तरे द्विपदिकया परिक्रम्य अवलोक्य च सहर्षम् ]। हन्त हन्त! व्यवसितस्य मे संवर्द्धनं वृत्तम्। (३३)—

आरक्तकोटिभिरियं कुसुमैर्नवकन्दली मलिनगर्भैः।
कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः॥ (३४)

इतो गतेति कथं मया खलु तत्रभवती सूचयितव्या? यतः,—

पद्भ्यां स्पृशेद्वसुमतीं यदि सा सुगात्री
मेघाभिवृष्ट-सिकतासु वनस्थलीषु।
पश्चान्नता गुरुनितम्बतया ततोऽस्याः
दृश्येत चारुपदपङ्क्तिरलक्तकाङ्का॥ ( ३५ )

---

( म ) दयितारहितोऽधिकं दुःखितो विरहानुगतः परिमन्थरकः।
गिरिकाननके कुसुमोज्ज्वलके गजयूथपतिस्तथा क्षीणगतिः॥

---

( ३१ ) पाठो वाद्यविशेषः, भिन्नको रागविशेषः। यथाह भरतः,—"षड्ज-मध्यमिकोत्पन्नो भिन्नको मध्यमो बहुः। षड्जग्रहांशो मन्यासो मन्द्रसोऽन्तोऽथवा भवेत्॥ षड्जादिमूर्च्छनः ग्रहः सञ्चारिणि सकाकलिः। प्रसन्नादियुतो दानवीरे रौद्रेऽद्भुते रसे। दिनस्य पश्चिमे यामे प्रयोज्यः सोमदैवतः॥" इति।

( ३२ ) अहं गजयूथपतिरपि स्वीयां प्राणवल्लभां रक्षितुं न शक्तः। कथं मे यूथपतित्वम्? धिक् माम् इति अतिदुःखे कारणम्। अत्र असतीत्यध्याहारः।

( ३३ ) हन्त हन्त! व्यवसितस्येति।—व्यवसितस्य प्रियाऽन्वेषणनियुक्तस्य मे संवर्द्धनं विरहानलसन्धुक्षणं जातम्।

( ३४ ) आरक्तकोटिभिरित्यादि।—इयं नवकन्दली आरक्ता कोटिः अग्रभागो येषां तैस्तथाविधैः मलिनगर्भैः कुसुमैः पुष्पैः, कोपात् अन्तर्बाष्पे अन्तरन्तरितबाष्पभराकुले तस्याः नयने स्मरयति। आर्या वृत्तम्।

[ द्विपदिकया परिक्रम्य अवलोक्य च ]। हन्त हन्त! उपलब्धमुपलक्षणं, येन तस्याः कोपनायाः सरसमुन्नीयते मार्गः। (३६)—

हृतोष्ठरागैर्नयनोदविन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कितम्।
च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम्॥(३७)

भवतु, आदास्ये तावत्। [ परिक्रम्य विभाव्य च सास्रम् ]। कथं सेन्द्रगोपं शाद्वलमिदं स्थानम्! तत् कुतोऽस्मिन् विपिने प्रियाप्रवृत्तिमागमयेयम्! ( ३८ ) [ विलोक्य ]। अयमासारोच्छलितशैलतटस्थलोपाषाणमधिरूढः।—

आलोकयति पयोदान् प्रबल-पुरोवात-नर्त्तितशिखण्डः।
केकागर्भेण शिखी दूरोन्नमितेन कण्ठेन॥ ( ३९ )

---

( ३५ ) पद्मामित्यादि।—सुगात्री अनवद्याङ्गी सा उर्वशी मेघैः अभिहृष्टाः सिकता यासु तासु वनस्थलीषु वसुमतीं पृथिवीं यदि पद्भ्यां स्पृशेत्, ततस्तदा गुरुनितम्बतया पश्चान्नता पश्चात् किञ्चिदवनता अलक्तकाङ्का अलक्तकचिह्नीपेता चारुपदपङ्क्तिर्मनोहरपादचिह्नपद्धतिर्दृश्येत, एवंविधानां पादचिह्नानामसद्भावात सर्वथा नात्र तस्या आगमनं जातमिति भावः। "अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात्" इति शाकुन्तले तुल्यः पर्य्यायः। वसन्ततिलकं वृत्तम्।

( ३६ ) हन्त हन्त! उपलब्धमित्यादि।—उपलक्षणं चिह्नम्। मार्गः पन्थाः उन्नीयते अनुमीयते।

( ३७ ) हृतोष्ठरागैरित्यादि।—निम्ननाभेः तस्याः हृतोष्ठरागैः नयनजलवर्षेण ओष्ठस्य ताम्बूलादिजनितरागः अपहृत इत्यर्थः, नयनोदविन्दुभिः अश्रुकणैः अङ्कितं चिह्नितं शुकोदरश्याममिदं स्तनांशुकं स्तनयुगलाच्छादि उत्तरीयवसनम्, असंशयं निश्चितं मां प्रति रुषा क्रोधेन भिन्नगतेः विसंष्ठुलगमनायाः च्युतं स्खलितं भ्रष्टमित्यर्थः, स्यादेव इति शेषः; कोपवशेन विसंष्ठुलपादविक्षेपेण गच्छन्त्या तया पश्चात् परित्यक्तमिति भावः। वंशस्थं वृत्तम्।

( ३८ ) भवतु, आदास्ये तावदित्यादि।—सेन्द्रगोपम् इन्द्रगोपाख्यरक्तवर्णकीटविशेषपरिव्याप्तं शाद्वलं नवदूर्वादलहरितम्। प्रियाप्रवृत्तिमागमयेयं प्रियायाः मार्गं प्राप्नोमि इत्यर्थः।

( ३९ ) आलोकयतीति।—प्रबलेन पुरोवातेन अभिमुखवातेन नर्त्तितः

भवतु, यावदेनं पृच्छामि।

[ अनन्तरे खण्डकः ]। (४०)—

संपत्त-बिसूरणओ तुरिअं परवारणओ।
पिअअम-दंसण-लालसओ गअबरु बिम्हिअ-माणसओ॥ (य) (४१)

[ तेना (४२) खण्डकान्तरे चर्चरी ]।—

बरहिण-पब्भ! तुइ अब्भत्थेमि आअक्खहि मे ता
एत्थ अरसे भमंते जइ तुए दिट्ठा सा मह कंता।
णिसम्मइ मिअंकसरिसे बअणे हंसगई
ए चिण्हे जाणीहिसि आअक्खिउ तुज्झ मई॥ (र) (४३)

(य) सम्प्राप्तविसूरणकस्त्वरितं परवारणकः।
प्रियतमा-दर्शन-लालसको गजवरो विस्मितमानसकः॥

(र) बर्हिणप्रभो! त्वामभ्यर्थये आचक्ष्व मे तत्
अवारण्ये भ्रमता यदि त्वया दृष्टा सा मम कान्ता।
निशामय मृगाङ्कसदृशं वदनं हंसगतिः
एतच्चिह्नं ज्ञास्यसि आख्यातं तुभ्यं मया॥

शिखण्डी बर्हः यस्य स तथाभूतः; तथा दूरोन्नमितेन उन्नतीकृतेन कण्ठेन उपलक्षितः शिखी मयूरः पयोदान् मेघान् आलोकयति।

(४०) अनन्तरे खण्डकः। खण्डकलक्षणं यथा भरतः,—"पूर्वं चतुर्विंशतिभिरष्टाविंशतिभिः परम्। मात्राभिरिह यस्यार्द्धं खण्डकः स प्रकीर्त्तितः॥" यद्वा—"विरहव्याप्तता या तु पठेद्गीतिं कुशीलवौ। प्राकृतेन प्रबन्धेन खण्डकः स उदाहृतः॥" इति।

(४१) सम्प्राप्तेत्यादि।—सम्प्राप्तं विसूरणं ("खिदेर्विसूरः" इति विसूरादेशः) येन सः सञ्जातखेद इत्यर्थः।

(४२) "तेकारः शङ्करः प्रोक्तो नाकारश्च उमा तथा। गीतादौ तेन वक्तव्यं तेना इत्यक्षरद्वयम्॥" इति।

(४३) बर्हिणप्रभो! इति।—हे बर्हिणप्रभो! मयूरश्रेष्ठ! अभ्यर्थये याचे।

[ चर्चरिकयोपविश्य अञ्जलिं बद्धा ]।—

नीलकण्ठ ! ममोत्कण्ठा वनेऽस्मिन् वनिता त्वया ।
दीर्घापाङ्गा सितापाङ्ग ! दृष्टा दृष्टिक्षमा भवेत् ? ॥ (४४)

[ चर्चरिकया विलोक्य ]। कथमदत्त्वैव प्रतिवचनं नर्त्तितुमारब्धः ! । [ पुनश्चर्चरी ]। तत् किं नु खलु प्रहर्षकारणमस्य ? आं, ज्ञातम् ।—

मृदुपवनविभिन्नो मत्प्रियायाः प्रणाशात्
घनरुचिरकलापो निःसपत्नोऽद्य जातः ।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्हः ? ॥ (४५)

भवतु, परव्यसनसुखितं न पुनरेनं पृच्छामि । [ द्विपदिकया दिशोऽवलोक्य ]। अये ! इयमातपान्त-सन्धुक्षितमदा जम्बूविटपमध्यास्ते परभृता। विहगेषु पण्डितैषा जातिः ; यावदेनां पृच्छामि ।

[ अनन्तरे खुरकः ]। ( ४६ )—

---

निशामय शृणु । मृगाङ्कसदृशं वदनं, मम कान्ताया इति शेषः । हंसगतिः, सा कान्ता इति भावः। एतादृशचिह्नविशिष्टा मम कान्ता त्वया दृष्टा चेत् मां कथय ।

( ४४ ) हे सितापाङ्ग ! श्वेतदृगन्त ! नीलकण्ठ ! मयूर ! मम इयम् उत्कण्ठा, अथवा उत्कण्ठारूपा सा दीर्घापाङ्गा आकर्णनयना दृष्टिक्षमा दर्शनयोग्या, सुदर्शना इत्यर्थः, मे वनिता, अस्मिन् वने किं त्वया दृष्टा ? ।

( ४५ ) मृदिति ।—मृदुपवनेन विभिन्नः इतस्ततश्चालितः । घनरुचिरकलापः घनः निविडः रुचिरः कलापः पिच्छः यस्य तादृशः, नीलकण्ठः इति शेषः । निःसपत्नः प्रतिपक्षशून्यः, निःशत्रुकः। सुकेश्याः उर्वश्याः । कुसुमसनाथे पुष्पशोभिते ; कं जनं हरेत् आकर्षेत् ? पुष्पभूषिते उर्वश्याः केशपाशे सति एष बर्हः कमपि जनं रञ्जयितुं नैव शक्नुयात् इति भावः। मालिनी वृत्तम् ।

( ४६ ) खुरको नृत्यविशेषः। तदुक्तं,—"पठमञ्जरिरागसंयुतं यत् द्रुतमध्येन

बिज्जाहर-काणण-लीणओ
दुक्खविणिग्गअ-बाहुप्पोलओ ।
दूरोस्सारिअ-हिअआणंदओ
अंबरमाणेण भमइ गइंदओ ॥ (ल) (४७)

[ खुरकानन्तरे चर्चरी ] ।—

परहुअ ! महुर-पलाविणि ! कंता णंदणवणे सच्छंदं भमंती ।
जइ तुए पिअदमा सा मह दिट्ठा ता आअक्खहि मह परपुट्टे ! ॥
(व) (४८)

[ एतदेव नर्त्तित्वा बलन्तिकया (४९) उपसृत्य जानुभ्यां स्थित्वा ]।
भवति !—

त्वां कामिनो मदनदूतिमुदाहरन्ति
मानापमान-निपुणां त्वममोघमस्त्रम् ।
तामानय प्रियतमां मम वा समीपं
मां वा नयाशु मृदुभाषिणि ! यत्र कान्ता ॥ (५०)

(ल) विद्याधर-कानन-लीनको दुःखविनिर्गत-वाष्पोत्पीड़कः ।
दूरोत्सारित-हृदयानन्दकोऽम्बरमाणेन भ्रमति गजेन्द्रकः ॥

(व) परभृते ! मधुरप्रलापिनि ! कान्ता नन्दनवने स्वच्छन्दं भ्रमन्ती ।
यदि त्वया प्रियतमा सा मम दृष्टा तदाचक्ष्व मह्यं परपुष्टे ! ॥

लयेन यत्र प्रयुक्तम् । प्रतितालयुतं च नर्त्तनं तत् खुरकाख्यं मुनयो शिवेन दत्तम् ॥" ( "लघुद्रुतद्वयं यत्र प्रतितालः प्रकीर्त्तितः ॥" इति ) । यद्वा—खुरकाख्यो गेयविशेषः ; आह च भरतः,—"पूर्वपूर्वाचरत्यागे योऽन्यो वर्णचयः स चेत् । उत्तरोत्तरसङ्घादौ खुरकः परिकीर्त्तितः ॥" इति ।

(४७) अम्बरमाणेन (उपलक्षणे तृतीया) आकाशपरिमितेन अङ्गेन अत्युच्चेनेति यावत् ।

(४८) परभृते परपुष्टे इत्यत्र आदरे द्विरुक्तिः, अथवा वक्तुरुन्मत्तत्वान्न दोषावहम् ।

(४९) बलन्तिका रागोपाङ्गविशेषः ।

[ वामकेन किञ्चिद्वलित्वा आकाशे ]। (५१) किमाह भवती ? कथं मामेवमनुरक्तमपहाय गतेति ? [ अग्रतोऽवलोक्य ]। भवति !—

कुपिता न तु कोपकारणं सकृदप्यात्मगतं स्मराम्यहम्।
प्रभुता रमणेषु योषितां न हि भावस्खलितान्यपेक्षते ॥ (५२)

[ ससम्भ्रममुपविश्य, अनन्तरं जानुभ्यां स्थित्वा, पुनः "कुपिता" इत्यादि पठित्वा विलोक्य च ]। कथं कथाविच्छेदकारिणी (५३) स्वकार्य्ये व्यासक्ता ! अथवा सुष्ठु खलु इदमुच्यते।—

महदपि परदुःखं शीतलं सम्यगाहुः
प्रणयमगणयित्वा यन्ममापन्नतस्य।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता
फलमभिनवपाकं राजजम्बूद्रुमस्य ॥ (५४)

---

(५०) त्वामिति।—मदनदूतिं विरहिणोः नायकनायिकयोः परस्परमिलनसम्पादनेन कामस्य दूतीम्। मानापमाननिपुणं मानस्य अपमाने अवहेलने, दूरीकरणे इत्यर्थः, निपुणां समर्थम्। "मानापभङ्ग" इति पाठान्तरम्। वसन्ततिलकं वृत्तम्।

(५१) वामकं पार्श्वस्थवस्तुनः अवलोकने संस्थानविशेषः। यदुक्तं,—"धुतेन शिरसा यत्तु पार्श्वेन वलितेन च। तद्वामकं वै करणं पार्श्वस्थस्यावलोकने ॥" इति। आकाशे इति।—"किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्। श्रुत्वेवानुक्तमप्येतत्तत् स्यादाकाशभाषितम् ॥" इति।

(५२) कुपितेति।—सकृदपि एकवारमपि, किञ्चिदपीत्यर्थः। रमणेषु प्रियतमेषु। भावस्खलितानि भावस्य आशयस्य, प्रणयभावस्य इत्यर्थः, स्खलितानि स्खलनानि, अन्यथाभावानित्यर्थः। स्त्रियो हि प्रियतमेषु अकारणमेव कुप्यन्ति, न तु अत्र प्रणयभङ्गादिकमपेक्षन्ते इति भावः। सुन्दरी वृत्तम्।

(५३) कथं कथाविच्छेदेत्यादि।—कथाविच्छेदकारिणी मम कथायाम् अनवहिता विषयान्तरविक्षिप्तचित्ता, अननुरागिणी इति भावः।

(५४) महदपीत्यादि।—महदपि गुरुतरमपि परदुःखं शीतलं सम्यगाहुः इति यथार्थमेव। यत् यस्मात् मदान्धा वसन्तमदमत्ता इयं कोकिला आपन्नतस्य

तदेवं गतेऽपि प्रियेव मे मञ्जुस्वनेति न मे कोपो- ऽस्याम्। सुखमास्तां भवती ; साधयामस्तावत्। [उत्थाय द्विपदिकया परिक्रम्यावलोक्य च]। अये! दक्षिणेन वनधारां (५५) प्रियाचरणविक्षेपशंसी नूपुरशब्दः। यावदेनमनुगच्छामि।

[ककुभेन खण्डकः]। (५६)—

पिअअम विरह-किलामिअ वदणओ
अविरल-बाहजलाउल-णअणओ।
दुस्सहदुक्ख-विसंठुल-गमणओ
पसरिअ-उरुताबअ-दीविअ-अंगओ।
अहिअं दुम्मिअ-माणसओ दुरिअं गओ
काणणे परिब्भमइ गइंदओ॥ (अ) (५७)

(अ) प्रियतमाविरहक्लान्तवदनकोऽविरलवाष्पजलाकुलनयनकः।
दुःसहदुःखविसंष्ठुलगमनकः प्रसृतोरुतापदीपिताङ्गकः।
अधिकं दूनमानसको दुरितं गतः कानने परिभ्रमति गजेन्द्रकः॥

दयिताविरहदुःखार्त्तस्य मम प्रणयमनुरागं गाढ़ानुरागजनितं दुःखमिति भावः। अगणयित्वा अविचार्य्यैव राजजम्बूद्रुमस्य अभिनवपाकं सद्यः पक्वं फलम् अधरमिव पातुं प्रवृत्ता प्रक्रान्ता। यथा काचित् स्मरान्धा कामिनी आर्त्तजननिवेदनमनपेक्ष्यैव आलिङ्गनचुम्बनादिना रतिलीलामारभते, तद्वदियमपि आर्त्तस्य मम वचनमनादृत्यैव स्वकार्य्ये व्यासक्तेति भावः। मालिनी वृत्तम्।

(५५) तदेवं गते इत्यादि।—तत्तस्मात् एवं गतेऽपि एवं मम निवेदनमनपेक्ष्य विषयान्तरव्यापृते सत्यपि, मत्प्रियेव यत् मधुरभाषिणीयम्, अतः अस्यां मे कोपोऽयुक्त इति भावः। अये! दक्षिणेनेत्यादि।—वनधारां वनपङ्क्तिं, वनश्रेणी- मित्यर्थः, दक्षिणेन तस्य दक्षिणतः इत्यर्थः। ("धारा पङ्क्तौ द्रवद्रव्यस्रवेऽश्वगतिपञ्चके" इति कोषः)। दक्षिणेनेत्येनप्प्रत्ययान्तो निपातः। तद्योगे च वनधारामिति द्वितीया।

(५६) ककुभो रागविशेषः। खण्डकः अवच्छेदः।

(५७) प्रियतमाविरहेत्यादि।—दुःसहदुःखविसंष्ठुलगमनः दुःसहेन दुःखेन विसंष्ठुलं विशृङ्खलं गमनं यस्य सः। दुरितं दुःखं गतः प्राप्तः। आर्य्या वृत्तम्।

[ अनन्तरे द्विपदिकया दिशोऽवलोक्य ]।—

पिअकरिणी-विच्छेइअओ गुरुसोआणलदीविअओ।
वाहजलाउल-लोअणओ करिवर भमइ समाउलओ॥ (ष)
(५८)

[ सकरुणम् ]। हा धिक्! कष्टम्।—

मेघश्यामा दिशो दृष्ट्वा मानसोत्सुकचेतसा।
कूजितं राजहंसेन नेदं नूपुरशिञ्जितम्! ॥ (५९)

[ इति पठित्वा उत्थाय ]। भवतु, यावदेते मानसोत्सुकाः पतत्रिणः सरसोऽस्मात् न उत्पतन्ति, तावदेतेभ्यः प्रियाप्रवृत्तिमागमयेयम्। [ वलन्तिकया उपसृत्य जानुभ्यां स्थित्वा ]। (६०)

हंहो जलविहङ्गमराज!—

पश्चात् सरः प्रतिगमिष्यसि मानसं त्वं
पाथेयमुत्सृज विसं ग्रहणाय भूयः।
मां तावदुद्धर शुचो दयिताप्रवृत्त्या
स्वार्थात् सतां गुरुतरा प्रणयिक्रियैव॥ (६१)

(ष) प्रियकरिणीविच्छेदितकः गुरुशोकानलदीपितकः।
वाष्पजलाकुललोचनकः करिवरो भ्रमति समाकुलकः॥

(५८) प्रियकरिणीति।—प्रियकरिणीविच्छेदितकः प्रियकरिण्या सह प्राप्तविच्छेदः। गुरुशोकानलदीपितकः प्रबलशोकाग्निदग्धः।

(५९) मेघश्यामेत्यादि।—मेघेन मेघोदयेन श्यामा नीला। मानसे तदाख्यसरोवरे उत्सुकं मानसगमनाय उत्कण्ठितम् इत्यर्थः, चेतश्चित्तं यस्य तेन। "ज्योत्स्नापेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः" इत्यादि कविसमयप्रसिद्धत्वात्। अत्र अप्रकृतं नूपुरशिञ्जितं निषिध्य प्रकृतराजहंसकूजितस्थापनात् निश्चयालङ्कारः। अनुष्टुप् वृत्तम्।

(६०) भवतु, यावदेते इत्यादि।—प्रियाप्रवृत्तिं प्रियाया वार्त्ताम् आगमयेयं जानीयाम्। वलन्तिका गीतिविशेषः गतिविशेषो वा।

(६१) पश्चादिति।—त्वं मानसं सरः तदाख्यं सरोवरं पश्चात् प्रतिगमिष्यसि।

[ तिर्यगवलोक्य ]। अये ! यथा उन्मुखमालोकयति, तथा व्यक्तं,—"प्रवासोत्सुकमनसा मया न दृष्टा" इत्याह। [ उपविश्य चर्चरी ]। अरे रे हंस! किं गोइज्जइ ?। (स) [ इति नर्त्तित्वा उत्थाय ]।—

यदि हंस ! गता न ते नतभ्रूः
सरसो रोधसि दृक्पथं प्रिया मे।
मदखेलपदं कथं नु तस्याः
सकलं चोर ! गतं त्वया गृहीतम् ? ॥ (६२)

गइ अणुसारे मए लक्खिज्जइ। (ह) (६३) [ चर्चरिकया उपसृत्य अञ्जलिं बद्ध्वा ]।—

हंस ! प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता।
विभावितैकदेशेन देयं यदभियुज्यते ॥ (६४)

(स) अरे रे हंस ! किं गोप्यते ?।
(ह) गत्यनुसारेण मया लक्ष्यते।

पाथेयं पथि सम्बलभूतं बिसं मृणालदण्डं भूयः पुनः ग्रहणाय उत्सृज त्यज मदुत्तरदानार्थम् इदानीं परित्यज। पूर्वं तावत् मां दयिताप्रवृत्त्या प्रियासंवाददानेन शुचो विरहदुःखात् उद्धर। को नाम भवदनुरोधः ? यत् मम गतिप्रभेदः स्यादित्यभिप्रेत्याह—प्रणयिक्रिया प्रणयिजनोपकारः सतां स्वार्थात् गुरुतरा महती। न स्वार्थमनुसरन्ति साधवः, परन्तु परोपकारव्रतमेव एषां परं साधनमिति भावः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः अलङ्कारः। वसन्ततिलकं वृत्तम्।

(६२) यदि हंसेति।—रे हंस ! यदि नतभ्रूः सा मे मम प्रिया सरसो रोधसि तीरे ते तव दृक्पथं न गता नयनपथं न पतिता, तदा हे चोर ! कथं किम्प्रकारेण मदेन खेलं सलीलं पदं यस्मिन् तत् मदखेलपदं तस्याः सकलं सम्पूर्णं गतं गमनं त्वया गृहीतम् ? यदा भवद्गतिः मत्प्रियागत्यनुकारिणी, तदा ध्रुवमेव भवता प्रियतमा मे दृष्टेति भावः। मालभारिणी वृत्तम्।

(६३) मत्प्रियागतिसदृशं तव गमनं दृष्ट्वा त्वया अवश्यमेव सा दृष्टेति मया निश्चीयते इत्यर्थः।

(६४) हंसेति।—हंस ! प्रयच्छ मे कान्ताम्। "कुत्र ते कान्ता, केन वा

[ पुनश्चर्चरी ]।—

कइ तुए सिक्खिदमिदं गइलालस !।

सा तुए दिट्ठा जहणभरालसा ॥ ( च ) (६५)

[ पुनश्चर्चरी। सानुनयं "हंस ! प्रयच्छ" इत्यादि पठित्वा पुनश्चर्चरिकया साक्षेपं "हंस ! प्रयच्छ" इत्यादि पठित्वा द्विपदिकया निरूप्य विहस्य ]। "एष स्तेयानुशासी राजा" इति अतिभयादुत्पतितः। यावदन्यमवकाशमवगाहिष्ये। (६६) [ द्विपदिकया परिक्रम्य अवलोक्य च ]। अये ! प्रियासहायश्चक्रवाकस्तिष्ठति ; यावदेनं गच्छामि।

[ अनन्तरे कुटिलिका ]।—मम्मर-रणिअ-मणोहरए

[ मन्दघटी ]।—कुसुमिअ तरुवर-पल्लविए।

[ चर्चरी ]।—दइआ-बिरहुम्माइअओ

काणणे भमइ गइंदओ ॥ (क) (६७)

---

( च ) कुत्र त्वया शिक्षितमेतत् गतिलालस !।

सा त्वया दृष्टा जघनभरालसा ॥

( क ) मर्मर-रणित-मनोहरके कुसुमित-तरुवर-पल्लविते।

दयिता-विरहोन्मादितकः कानने भ्रमति गजेन्द्रकः ॥

---

अपहृता, नाहं जाने" इति चेत् न क्षमः खलु त्वमेतत्कथनाय ; यतोऽस्या मे कान्ताया गतिस्त्वयापहृता ; अदृष्टस्यानुकरणमसम्भाव्यमेव। एतावदुक्तेः परतरं हि आत्मानं प्रति राजेति ज्ञानविस्फुरणम् ; तेनैवमुक्तिः,—हंस ! विभावितैकदेशेन अपहृतवस्तुन एकदेशमपि त्वमङ्गतमिति विभाव्य अभियोगवता राजसमीपे यत् यदर्थमभियुज्यते तत्त्वया देयं प्रत्यर्पणीयमिति भावः। अनुष्टुब्वृत्तम्।

( ६५ ) पूर्वश्लोकोक्तिमनुसृत्य पुनराह, कुत्रेति।—ननु वा रे गतिलालस ! यद्गत्यां त्वमीदृक् लालसावान्, तदेतत्त्वया कुत्र शिक्षितम् ? अतः खलु अर्थिनोऽर्थमवश्यमेव देयं ते इति भावः।

( ६६ ) एष स्तेयानुशासीत्यादि।—स्तेयं चौर्य्यम् अनुशास्ति यः स स्तेयानुशासी, दुष्टस्य शास्ता शिष्टस्य पुरस्कर्त्ता नरपतिरिति प्रसिद्धः। उत्पतितः उड्डीनः। अन्यमवकाशं प्रियाप्रवृत्तिजिज्ञासाय्यलान्तरम् अवगाहिष्ये गमिष्यामि, स्थानान्तरमन्विष्यामि इत्यर्थः।

( ६७ ) कुटिलिका नाट्यविशेषः। यदुक्तं—"रागेण रहितं यत्तु आर्द्र-

[ द्विलयान्तरे चर्चरी ]। ( ६८ )—

गोरोअणा-कुंकुमवस्मा चक्का भणह मं।
महुवासरे कीलंती धणिआ ण दिट्ठा तुए॥ (ख) (६९)

[ चर्चरिकया उपसृत्य जानुभ्यां स्थित्वा ]।—

रथाङ्गनामन्! सन्त्यक्तो रथाङ्गश्रोणिविम्बया।
अयं त्वां पृच्छति रथी मनोरथशतैर्वृतः॥ (७०)

अयं "कः कः?" इत्याह; न किल विदितोऽहमस्य। (७१)

---

( ख ) गोरोचना-कुङ्कुमवर्ण! चक्र! भण माम्।
मधुवासरे क्रीड़न्ती धन्या न दृष्टा त्वया॥

---

मत्तलिकायुतम्। भाषयैव च तन्नाम्नां कुटिलीसंज्ञकं मतम्॥" ( अर्द्धमत्तली-लक्षणन्तु,—"उपेतापसृतौ पादौ वामश्चेद्रेचितः करः। कल्याममन्यस्तदा त्वर्द्धमत्तली तरुणीमदे॥" इति )। मर्मरेति।—मर्मररणितेन शुष्कवृक्षपत्राणां गजेन्द्रपदताड़न-जनितमर्मरशब्देन मनोहरके। मन्दघटी नाट्यविशेषः। कुसुमिताः तरुवराः पल्लविता यत्र तादृशि।

---

( ६८ ) नृत्यगीतवाद्यानां साम्यं लयः। तस्य च वैविध्यमुक्तं यथा,—"द्रुतो मध्यो विलम्बश्च लयः स त्रिविधो मतः" इति।

( ६९ ) गोरोचनेति।—गोरोचना माङ्गल्यद्रव्यविशेषः, तया कुङ्कमेन च तुल्यो वर्णो यस्य तादृश! पीतवर्ण! इत्यर्थः। चक्र! चक्रवाक! मधुवासरे वसन्त-दिवसे। धन्या महीयसी, सुन्दरीति भावः।

( ७० ) रथाङ्गेति।—हे रथाङ्गनामन्! चक्राह्व! चक्रवाक! इत्यर्थः, अहं रथाङ्गश्रोणिविम्बया रथाङ्गवत् रथचक्रवत् आयतमिति यावत्, श्रोणिविम्बं नितम्बमण्डलं यस्याः ( भवता सह नामसादृश्यात् केवलं चक्रोल्लेखो मया कृतः, परन्तु रथस्यान्यान्योपकरणीभूतं सर्वमेवाङ्गं तस्यामास्ते ) तद्रथस्याहं रथी, इदानीन्तु तया सन्त्यक्तो हि नीरथः संवृत्त इति भावः। तस्यास्तु तत्तदङ्गस्मरणेन मनोरथशतैर्वृतः सन् अयं जनस्त्वां पृच्छति। अनुष्टुप् वृत्तम्।

( ७१ ) 'कक' इति चक्रवाकरुते कः कः इति राज्ञः शाब्दबोधः।

सूर्य्याचन्द्रमसौ यस्य मातामहपितामहौ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः॥ (७२)

कथं तूष्णीमिवास्ते! भवतु, उपालभे तावदेनम्। [जानुभ्यां स्थित्वा]। तद्युक्तं तावत् आत्मानुमानेन वर्त्तितुम्। (७३) कुतः?—

सरसि नलिनीपत्रेणापि त्वमावृतविग्रहां
ननु! सहचरीं दूरे मत्वा विरौषि समुत्सुकः।
इति च भवतो जायास्नेहात् पृथक्स्थितिभीरुता
मयि च विधुरे भावः कोऽयं प्रवृत्ति-पराङ्मुखः?॥ (७४)

[उपविश्य]। सर्वथा मदीयानां भाग्यविपर्य्ययाणामयं प्रभावः। यावत् अन्यमवकाशम् अवगाहिष्ये। [द्विपदिकया परिक्रम्य अवलोक्य च]। अये!—

इदं रुणद्धि मां पद्ममन्तःक्वणितषट्पदम्।
मया दष्टाधरं तस्याः सशीत्कारमिवाननम्॥ (७५)

---

(७२) सूर्य्येति।—पुरा किल स्वायम्भुवमनुपुत्त्रः सूर्य्यनप्ता सुद्युम्नापरनामा इलो नाम राजा मृगयाप्रसङ्गेन हरनिवारितमुपवनमेकाकी परिभ्रमन् स्त्रीभावमाजगाम। चन्द्रपुत्त्रः बुधः तां दृष्ट्वा सन्निहितमाश्रमं निनाय। स च तस्यां पुरूरवसं पुत्त्रमजीजनत्। तेन पुरूरवसः सूर्य्यो मातामहः चन्द्रश्च पितामहः सञ्जातः इति पौराणिकी वार्त्ता। अत्र अलौकिकसमृद्धिवर्णनात् उदात्तालङ्कारः। अनुष्टुप् वृत्तम्।

(७३) सहचरीविरहे तु तव यादृक् भवति, तदनुमानेन मय्यपि वर्त्तनं ते न्याय्यमिति भावः।

(७४) पृथक्स्थितिभीरुता पृथगवस्थाने भीरुता, प्रियां विना कथमहमेकाकी वर्त्तिष्ये इति भयम्। हरिणी वृत्तम्।

(७५) इदं रुणद्धीत्यादि।—अन्तर्मध्ये क्वणिताः शब्दायमानाः षट्पदा यस्य तथाभूतम् इदं पद्मं मां रुणद्धि मम गतिप्रतिषेधं करोति इत्यर्थः। कथमिव? यतः इदं पद्मं मया दष्टाधरं सुरतावसरे प्राप्तमहन्तचतम् अत एव सशीत्कारं तस्या

इतो गतस्य अनुशयो मा भूदिति अस्मिन्नपि कमलशये भ्रमरे प्रणयं करिष्ये। (७६)

[ अस्य अनन्तरे अर्द्धद्विचतुरस्रक: ]। (७७)—

एक्कक्कम-वड्ढिअ-गुरुअर-प्पेम्मरसे।
सरे हंसजुआणओ कीलइ कामरसे॥ (ग) (७८)

[ चतुरस्रकेण उपविश्य अञ्जलिं बद्ध्वा ]। (७९)—

---

(ग) एकक्रमवर्द्धितगुरुतरप्रेमरस:।
सरसि हंसयु-वक: ( वा नाव ) क्रीड़ति कामरसे॥

---

आननमिव ; मनोहरं प्रियाया मुखमण्डलं स्मारयन् मामत्रैव बध्नातीति भाव:। अनुष्टुप् वृत्तम्।

(७६) इत: कमलात् गतस्य सुखस्थानं कमलं परित्यज्य अन्यत्र कुत्रचिद्गामिनो मम अनुशय: कमलपरित्यागजन्यानुतापो मा भूदिति विभाव्य कमलशये कमल-हृदयशायिनि भ्रमरे प्रणयं करिष्ये।

(७७) अर्द्धद्विचतुरस्रक: नाट्यविशेष:. तदुक्तं यथा,—"अस्यैव चेच्चरणयोरन्तरं स्यात् यदङ्गुलम्। वितस्तिमात्रमथवा नन्द्यावर्त्तं तदुच्यते॥" अस्यैव नन्द्यावर्त्त-मित्यपरं नाम।

(७८) कमलासक्ते भ्रमरे प्रणयं करिष्ये इत्युपक्रम्य तत: परं विहरन्तं हंसं वर्णयति—एवम् उन्मादातिशयवशेन भ्रमरमिव हंसवद्‌बुद्ध्या वर्णयति, अथवा हंसा-न्योक्त्या स्वावस्थामेव प्रकाशयति, एक्कक्केति।—एकक्रमेण मिलनावधि अविच्छेदेन वर्द्धितगुरुतरप्रेमरसे ; यद्वा—एकक्रमवर्द्धितगुरुतरप्रेमरस: हंसयुवा कामरसेन शरेण विद्ध: नावक्रीड़ति। कामस्य रसोऽभिनिवेशो यस्मिन् तादृशेन एकक्रमेण युगपद्वर्द्धित: (वृधु—छेदने + क्त:) छिन्न: प्रियावियोगेनेति भाव:। गुरुतरप्रेमरसोन्मत्त ईषत् क्रीड़ामपि न करोति इति निष्कर्ष:। अथवा व्यतिरेकदृष्टान्तेन स्वं तिरस्कुर्वन्नाह—कामरसेन युगपदुद्भावितप्रेमरस: हंसयुवा क्रीड़ति मन्दभाग्योऽहं प्रियामवलोकयितु-मपि न प्राप्नोमीति भाव:। प्रेमरसे सरे कामरसे इत्यादिषु प्रथमास्थाने तृतीये अव्यवस्थिते "प्राकृते लिङ्गवचनमतन्त्रम्" इति हेमचन्द्र:। "कामवश:" इति पाठे—कामासक्त:।

(७९) चतुरस्रलक्षणं यथा।—"नन्द्यावर्त्तप्रमाणाद्धि भवेदष्टादशाङ्गुलम्। अन्तरं चतुरै: स्थानं चतुरस्रं तदीरितम्॥" इति।

मधुकर ! मदिराक्ष्याः शंस तस्याः प्रवृत्तिं
वरतनुरथ वाऽसौ नैव दृष्टा त्वया मे ।
यदि सुरभिमवाप्तस्तन्मुखोच्छ्वासगन्धं
तव रतिरभविष्यत् पुण्डरीके किमस्मिन् ? ॥ (८०)

[ इति द्विपदिकया परिक्रम्य अवलोक्य च ]। अये ! करिणी-सहायो नागाधिराजो नीपस्कन्ध-निषण्णस्तिष्ठति ; यावदेनं गच्छामि ।

[ कुटिलिका ]।—करिणी-विरह संदाविअओ

[ मन्दवटी ]।—काणणए गंधुद्दुअ-महुअरओ। ( घ ) (८१)

[ अतीऽन्तरे विलोक्य ]। अथवा न तावदयम् उपसर्पणकालः।—

अयमचिरोद्गत-पल्लवमुपनीतं प्रियतमाग्रहस्तेन ।
अभिलषतु तावदासव-सुरभिरसं शल्लकीभङ्गम् ॥ (८२)

---

( घ ) करिणीविरहसन्तापितकः कानने गन्धोद्धुतमधुकरकः।

---

( ८० ) मधुकरेत्यादि।—हे मधुकर ! भ्रमर ! मदिराक्ष्या अलसलोचनायाः तस्याः प्रियायाः प्रवृत्तिं वार्त्तां शंस कथय। अथवा असौ मे मम वरतनुः अनवद्याङ्गी प्रियतमा नैव दृष्टा निश्चितमेव सा भवतो दृक्पथं न पतितेति भावः। कुतः ? इत्याह,—यदि सुरभिं शोभनं घ्राणं तन्मुखोच्छ्वासगन्धम् अवाप्तः तदा किं तव अस्मिन् तुच्छे इत्यर्थः, पुण्डरीके रतिः आसक्तिः अभविष्यत् ? यदा अनेन कमलगन्धेन भवत आकृष्टं चेतस्तदा मन्ये भवता न दृष्टा सा न च आघ्रातमस्याः पद्माधिकसुरभि मुखमण्डलमिति भावः। मालिनी वृत्तम्।

( ८१ ) करिणीति।—करिणीसहायेऽपि गजराजे करिणीविरहसन्तापितकः इत्युक्तिः मत्तताकार्य्यमिति ज्ञेयम्। गन्धेन नीपगन्धेन शल्लकीभङ्गसुरभिरसगन्धेन वा उद्धुताः उत्कम्पिताः उड्डीनाः मधुकरा यत्र तादृशः, नागाधिराजः तिष्ठतीति शेषः।

( ८२ ) आसवगन्धानुकारि क्षीरविशिष्टं शल्लकीभङ्गम्। शल्लकी गजप्रियवृक्षविशेषः। आर्य्या वृत्तम्।

[ स्थानकेन (८३) अवलोक्य ]। अये ! कृताहारकः संवृत्तः। भवतु, समीपम् अस्य गत्वा पृच्छामि।

[ अनन्तरे चर्चरी ]।—

अहं तुमं पुच्छिमि आअक्खहि गअवरु !
ललिअ-प्पहारेण णासिद-तरुवरु !।
दूरविणिज्जिअ-ससहरकंती
दिट्ठा प्पिआ तुए सम्मुहअंती ?॥ ( ङ ) ( ८४ )

[ पदद्वयं पुरत उपसृत्य ]।—

मदकल ! युवतिशशिकला गजयूथप ! यूथिका-शवल-केशी।
स्थिरयौवना स्थिता ते दूरालोके सुखालोका ? ॥ ( ८५ )

---

( ङ ) अहं त्वां पृच्छामि आचक्ष्व गजवर !
ललितप्रहारेण नाशिततरुवर !
दूरविनिर्जितशशधरकान्तिः
दृष्टा प्रिया त्वया सम्मोहयन्ती ?॥

---

( ८३ ) स्थानकेनावलोक्येति।—स्थानकं गमनावस्थानादिषु चेष्टाविशेषः। यदाह भरतः नाट्यशास्त्रे गतिप्रचाराख्ये द्वादशाध्याये,—"स्थानकं तावदेव स्यात् यावच्चेष्टा प्रवर्त्तते" इति।

( ८४ ) अहमिति।—ललितप्रहारेण सलीलाघातेन, क्रीड़ाच्छलादाघातेनेत्यर्थः। दूरविनिर्जितशशधरकान्तिः चन्द्रसुषमाविजयिनी। सम्मोहयन्ती दर्शनमात्रेणैव प्रेक्षकाणां मोहं जनयन्ती।

( ८५ ) मदकलेत्यादि।—हे मदेन मत्ततोदयेन कलः अव्यक्तनिर्ह्रादो यस्य तत्सम्बुद्धौ। हे गजयूथप ! करिणां यूथपते ! युवतिषु मध्ये शशिकला चन्द्रकलास्वरूपा (एतेन युवतीनां तारकात्वं, तथा शशिकलेति पदेन निष्कलङ्कत्वञ्च सूचितम्)। यूथिकाभिः तदाख्यकुसुमैः शवलाश्चिता: केशा यस्याः सा तथाभूता, तथा स्थिरम् अचञ्चलं यौवनं यस्याः सा स्थिरयौवना, सुखः सुखकरः सुखेन वा आलोको दर्शनं यस्याः सा प्रियदर्शना उर्वशी ते तव दूरालोके स्थिता किम् ? दूरादपि भवता किं दृष्टा ? इति भावः। आर्य्या वृत्तम्।

[सहर्षमाकर्ण्य]। अहह! अनेन प्रियोपलब्धिशंसिना मन्द्रकण्ठगर्जितेन समाश्वासितोऽस्मि। साधर्म्यात् भूयसी मे त्वयि प्रीतिः। (८६) कथम्? इति।—

मामाहुः पृथिवीभुजामधिपतिं नागाधिराजो भवान्
अव्युच्छिन्नपृथुप्रवृत्ति भवतो दानं समानं मम।
स्त्रीरत्नेषु ममोर्वशी प्रियतमा यूथे तवेयं वशा
सर्वं मामनु ते प्रियाविरहजां त्वन्तु व्यथां माऽनुभूः॥ (८७)

सुखमास्तां भवान्। [द्विपदिकया परिक्रम्य अवलोक्य च]। अये! अयमसौ सुरभिकन्दरो नाम विशेषरमणीयः सानुमान्, प्रियश्चायमप्सरसाम्, अपि नाम सुतनुरस्य उपत्यकायामुपलभ्येत? [परिक्रम्य अवलोक्य च]। कथमन्धकारः! भवतु, विद्युत्प्रकाशेन अवलोकयामि। कथं मदीयैर्दुरितपरिणामैर्मेघोदयोऽपि शतह्रदाशून्यः संवृत्तः! तथापि शिलोच्चयमेनमपृष्ट्वा न निवर्त्तिष्ये। (८८)

(८६) अहहेत्यादि।—साधर्म्यात् सादृश्यात्। भूयसी बहुला।

(८७) मामाहुः पृथिवीभुजामित्यादि।—मां पृथिवीभुजां राज्ञामधिपतिमधीश्वरमाहुः, जना इति शेषः। तथा भवान् नागानामधिराजः। अधीश्वरत्वमावयोः सममिति भावः। तथा अव्युच्छिन्ना निरवच्छिन्ना पृथ्वी महती प्रवृत्तिः यस्य तत् निरन्तरमेव चरदित्यर्थः, तव दानं मदजलं, पक्षे—दीनेभ्यः अर्थादिवितरणं मम समानम्। स्त्रीरत्नेषु मध्ये उर्वशी मम प्रियतमा, तथा यूथे गजयूथमध्ये इयं वशा करिणी तव प्रियतमा त्वयि अनुरक्ता। "वशा योषासुतावन्ध्यास्त्रीगवीकरिणीष्वपि" इति कोषः। अत एव ते तव सर्वं मामनु मम सदृशम्। तु किन्तु त्वं प्रियाविरहजां वनितावियोगजनितां व्यथां मा अनुभूः। शार्दूलविक्रीड़ितं वृत्तम्।

(८८) कथमन्धकार इत्यादि।—दुरितानां दुष्कृतीनां परिणामैः परिपाकैः। शतह्रदया विद्युल्लेखया शून्यः दर्शनोपयोगिविद्युदालोकविरहित इत्यर्थः।

[ अनन्तरे खण्डिका ]। (८९)—

खरखुर·दारिअ मेइणिओ वणगहणे अविअलु।
परिसप्पइ पेच्छइ लोणो णिअकज्जुज्जुअ कोलु॥ (च) (९०)

अपि वनान्तरमल्पभुजान्तरा
अयति पर्वत ! पर्वसु सन्नता।
इयमनङ्गपरिग्रहमङ्गला
पृथुनितम्ब ! नितम्बवती तव ? ॥ ( ९१ )

कथं तूष्णीमेवास्ते ! अङ्गे, विप्रकर्षात् न शृणोति। भवतु, समीपमस्य गत्वा पृच्छामि। (९२)

[ अनन्तरे चर्चरी ]।—

फटिअ-सिलादल-णिम्मल·णिज्झरु !
बहुविअकुसुमे विरइअ-सेअरु !

---

( च ) खरखुरदारितमेदिनीको वनगहनेऽविचल:।
परिसर्पति पश्यत लोनो निजकार्य्योद्यत्त: कोल:॥

---

( ८९ ) खण्डिका गीतिविशेष:। यदुक्तं,—"पर्य्यायेण शनैस्तिर्य्यङ्नतमुक्तं धुतं शिर:। श्रीरागकुम्भतालेन निबद्धा खण्डिका मता॥" यद्वा—गद्यभेद: खण्डिका, यदाह भरत:,—"खण्डी गणेशदेवत्या सात्वतीं वृत्तिमाश्रिता। श्वेता हास्यकृदारब्धा वैदर्भीभङ्गिसम्भवा॥'' इति।

( ९० ) खरखुर-दारितेत्यादि।—अत्र वराहरूपेण राज्ञो वर्णनम्। पक्षान्तरे—धीर: महारण्ये क्रीड़ार्थम् अन्तरित: प्रियतमाऽन्वेषणार्थं भ्रमति। प्रबलतरविरहकातरो हि हस्तपादेन भूम्यास्फालनञ्च करोतीति भाव:। पश्यतेति उन्मादवशादाकाशवचनम्।

( ९१ ) अपि वनान्तरमित्यादि।—हे पृथुनितम्ब ! पर्वत ! अल्पं नातिप्रशस्तं भुजयोरन्तरं वक्ष:स्थलं यस्या: स्तनयोरतिपृथुलत्वादित्यर्थ:। पर्वसु सन्धिस्थलेषु सन्नता, तथा अनङ्गस्य कन्दर्पस्य परिग्रह: पत्नी तद्वत् मङ्गला सुलक्षणयुक्ता, नितम्बवती पृथुनितम्बोपेता सा उर्वशी भवतो वनान्तरम्, अपि प्रश्ने, अयति ? अयति किम् ?। द्रुतविलम्बितं वृत्तम्।

( ९२ ) कथं तूष्णीमित्यादि।—विप्रकर्षात् दूरत्वात्।

किसुर-महुरुग्गीअ-मणोहरु !
देक्खावहि महु प्पिअदम महिअरु ! ॥ (क) (९३)

[ चर्चरिकया उपसृत्य अञ्जलिं बद्धा ]।—

सर्वक्षितिभृतां नाथ ! दृष्टा सर्वाङ्गसुन्दरी।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ? ॥ (९४)

[ तथैव प्रतिशब्दं शृणोति ]।

[ आकर्ण्य सहर्षम् ]। कथं ! यथाक्रमं दृष्टेत्याह ! भवतु, अवलोकयामि। [ दिशोऽवलोक्य सखेदम् ]। कथं ममैवायं कन्दरान्तरविसर्पी प्रतिशब्दः ! । (९५)

[ इति मूर्च्छति ]।

[ उत्थाय उपविश्य सविषादम् ]। अहह ! श्रान्तोऽस्मि ; यावदस्या गिरिनद्यास्तीरे तरङ्गवातमासेविष्ये। [ द्विपदिकया परिक्रम्य अवलोक्य च ]। इमां नवाम्बुकलुषां स्रोतोवहां पश्यता मया रतिरुपलभ्यते। कुतः ?—

(क) स्फटिक-शिलातल-निर्मलनिर्झर !
बहुविधकुसुमैर्विरचितशेखर !।
किन्नर-मधुरोद्गीत-मनोहर !
दर्शय मम प्रियतमां महीधर ! ॥

(९३) स्फटिकेति।—स्फटिकशिलातलवत् निर्मलः स्वच्छः शुभ्रश्च निर्झरः प्रस्रवणं, प्रस्रवणोदकमिति भावः, यस्य सः तत्सम्बुद्धौ। किन्नराणां मधुरोद्गीतेन मनोहरः तत्सम्बुद्धौ। महीधर ! पर्वत !। पज्झटिका वृत्तम्। तल्लक्षणं यथा,—"प्रतिपद-यमकित-षोड़शमात्रा। नवमगुरुत्व-विभूषित-गात्रा ॥" इत्यादि।

(९४) प्रश्नवाक्यस्यैव उत्तरतया योजितत्वात् विगतनामकं वीथ्यङ्गम्। यथा दर्पणे,—"विगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः" इति।

(९५) कथं ममैवायमित्यादि।—कन्दरायाः गुहायाः अन्तरे विसर्पति गच्छति यः स कन्दरान्तरविसर्पी।

तरङ्गभ्रूभङ्गा क्षुभित-विहगश्रेणि-रसना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम्।
यथा जिह्मं याति स्खलितमभिसन्धाय बहुशो
नदीभावेनेयं ध्रुवमसहमाना परिणता ॥ (८६)

भवतु, प्रसादयामि तावदेनाम्।

[अनन्तरं कुटिलिका]।—

पसिअ पिअदमए! सुंदरिए! णए।
खुहिअ-करुण-विहंगमए! णए।
सुरसरितीर-समूसुअ-एणए!
अलिउल-झंकारिए! एणए ॥ (ज) (८७)

[तेन कुटिलिकान्तरं चर्चरी]।—

पुव्वदिसा-पवणाहअ-कल्लोलुग्गअ-बाहुओ
मेहअंगे णच्चइ सललिदं जलणिहि-णाहओ।

(ज) प्रसीद प्रियतमे! सुन्दरिके! नदि! क्षुभित-करुणविहङ्गमके! नत्या! सुरसरित्तीर-समुत्सुकैणके! अलिकुल-झङ्कारिते! एनया॥

(८६) तरङ्गभ्रूभङ्गेत्यादि।—तरङ्ग एव भ्रूभङ्गो यस्याः सा, क्षुभितविहगश्रेणय एव रसना काञ्ची यस्याः सा, तथा संरम्भेण सम्भ्रमेण शिथिलं स्खलितबन्धनं वसनमिव फेनं विकर्षन्ती इयं नदी बहुशः स्खलितं यथा स्यात् तथा अभिसन्धाय मधुरास्फुटं किमपि किमपि व्याहृत्य जिह्मं वक्रं सव्रीलं यथा याति तथा ध्रुवं निश्चितमेव असहमाना कोपना सा उर्वशी नदीभावेन परिणता नदीत्वं प्राप्ता इति तर्कयामि। अत्र रूपकानुप्राणितोत्प्रेक्षालङ्कारः। शिखरिणी वृत्तम्।

(८७) उन्मादापहृतचित्तवृत्तिः राजर्षिः प्रियतमां नदीरूपेण परिणतामवधार्य पादपतनादिना तत्प्रसादनातत्परः चाटु करोति, प्रसीद प्रियतमे! इत्यादि।—हे प्रियतमे! सुन्दरिके नदि! नदीभावापन्ने उर्वशि! एनया नत्या अनेन पादपतनेन प्रसीद, मयि प्रसन्ना सती जलरूपं विहाय स्वरूपतो मत्समीपमागच्छ इत्यर्थः।

हंस-रहंग संख कुंकुम किआभरणु
करि-मअराउल-कसण-कमल-किआवरणु।
वेला-सलिलुव्वेल्लिअ-हत्थदिसु-तालु
ओत्थरइ दसदिसो रुंधेइ णवमेह-आलु॥ (भ) (९८)

[ चर्चरिकया उपसृत्य जानुभ्यां स्थित्वा ]।—

त्वयि निबद्धरतौ प्रियवादिनि
प्रणयभङ्ग-पराङ्मुख चेतसि।
कमपराधलवं मयि पश्यसि ?
त्यजसि मानिनि ! दासजनं यतः॥ (९९)

(भ) पूर्वदिक्पवनाहत-कल्लोलोद्गत-बाहुको
मेघाङ्गैर्नृत्यति सललितं जलनिधिनायकः।
हंस-रथाङ्ग-शङ्ख-कुङ्कुमकृताभरणः
करिमकराकुल-कृष्णकमल-कृतावरणः।
वेला-सलिलोद्वेल्लित-हस्तदत्ततालः
अवस्तृणाति दशदिशो रुद्धा नवमेघकालः॥

(९८) पूर्वदिगित्यादि।—पूर्वदिक्पवनेन पूर्वदिगुत्थितेन वायुना आहतः कल्लोल एव उद्गतः बाहुः करो यस्य स एवम्भूतः जलनिधिनायकः मेघाङ्गैः सह नृत्यति। जलनिधिनाथः किम्भूतः ? इत्याह, हंसेत्यादि।—हंसादिभिः कृतम् आभरणं येन सः ; करिभिर्हस्तिभिर्मकरैश्च आकुलेन व्याप्तेन कृष्णकमलेन कृष्णजलेन कृतम् आवरणं यस्य सः करिमकराकुलकृष्णकमलकृतावरणः। वेला सलिलानां वेलासमीपवर्त्तिजलानां यत् उद्वेल्लितम् उल्लुण्ठनं तदेव हस्तदत्तः तालः यस्य सः। नवमेघकालो नवजलधरसमयः दशदिशो रुद्धा अवस्तृणाति आच्छादयति।

(९९) त्वयीति।—त्वयि निबद्धरतौ त्वय्येव गाढ़ानुरक्ते प्रियवादिनि कदापि परुषभाषणमकुर्वति प्रणयभङ्गपराङ्मुखचेतसि शठनायकवत् कदापि नायिकान्तरासक्त्यादिना प्रणयच्छेदमकुर्वति मयि कम् अपराधलवं दोषलेशमपि पश्यसि ? हे मानिनि ! यतो यस्मात् कारणात् दासजनं त्यजसि। द्रुत-विलम्बितं वृत्तम्।

कथं तूष्णीमेव आस्ते ! अथवा परमार्थतः सरिदियं, न उर्वशी ; अन्यथा कथं पुरूरवसम् अपहाय समुद्राभिसारिणी भवेत् ? अनिर्वेदप्राप्याणि श्रेयांसि। भवतु, तमेव उद्देशं गच्छामि, यत्र मे नयनयोः सा सुनयना तिरोहिता। [ परिक्रम्य अवलोक्य च ]। इमं तावत् प्रियाप्रवृत्तये सारङ्गमासीनम् अभ्यर्थये। ( १०० )—

अभिनव-कुसुम-स्तवकित-तरुवरस्य परिसरे
मदकल-कोकिल कूजित-मधुप-झङ्कार-मनोहरे।
नन्दनविपिने निजकरिणी-विरहानलेन सन्तप्तो
विचरति गजाधिपतिरैरावतनामा ॥ (१०१)

[ गलितकः। (१०२) जानुभ्यां स्थित्वा ]।—

कृष्णसारच्छविर्योऽयं दृश्यते काननश्रिया।
नवशष्पावलोकाय कटाक्ष इव पातितः ॥ ( १०३ )

[ विलोक्य ]।—

अयमन्तिकमायान्तीं शिशुना स्तनपायिना।
अनन्यदृष्टिस्तामिव मृगीं रुद्धां निरीक्षते ॥ ( १०४ )

---

( १०० ) कथं तूष्णीमेवास्ते इत्यादि।—परमार्थतः याथार्थ्यतः। अनिर्वेदप्राप्याणि अनिर्विणैः अखिन्नैरेव प्राप्याणि, मया प्रियान्वेषणे खिन्नेन न भवितव्यं, भवतु, पुनरपि तदन्वेषणतत्परो भवामि इत्यर्थः। सारङ्गं मृगम्। अभ्यर्थये याचे, पृच्छामीत्यर्थः।

( १०१ ) अभिनवेति।—परिसरे प्रान्तदेशे। मदकलाभ्यां मदेनाव्यक्तमधुराभ्यां कोकिलकूजितमधुपझङ्काराभ्यां कोकिलालापभ्रमरगुञ्जनाभ्यां मनोहरे।

( १०२ ) गलितकः नाट्यविशेषः।

( १०३ ) कृष्णसारेति।—कृष्णसारो मृगविशेषः। कटाक्षपक्षे—कृष्णः कृष्णवर्णः सारः स्थिरांशः कनीनिका यस्मिन् सः। अनुष्टुप् छन्दः।

( १०४ ) अयमिति।—अयं सारङ्गः, स्तनपायिना शिशुना सह अन्तिकं

[चर्चरी]।—

सुरसुंदरी जहणभरालस्र पीणुत्तुंग-घणत्थणी
थिरजोव्वण-तणुसरीरि हंसगइ।
गअणुज्जल-काणणे मिअलोअणि भमंते
दिट्ठ तुए? तहविरह-समुद्दंतरे उत्तरहि मं॥ (ञ) (१०५)

[उपसृत्य अञ्जलिं बद्ध्वा]। हंहो हरिणीपते!—

अपि दृष्टवानसि मम प्रियां वने?
कथयामि ते तदुपलक्षणं शृणु।
पृथुलोचना सहचरी यथैव ते
सुभगा तथैव खलु साऽपि वीक्ष्यते॥ (१०६)

[विलोक्य]। कथमनादृत्य मद्वचनं कलत्राभिमुखं स्थितः! सर्वथा उपपद्यते परिभवास्पदं विधिविपर्य्ययः। यावदन्य-

---

(ञ) सुरसुन्दरी जघनभरालसा पीनोत्तुङ्गघनस्तनी
स्थिरयौवना तनुशरीरा हंसगतिः।
गगनोज्ज्वलकानने मृगलोचना भ्रमन्ती
दृष्टा त्वया? तद्विरहसमुद्रान्तरादुत्तारय माम्॥

---

समीपमायान्तीं, रुद्धाम् आगमनावसरे व्याधेन बद्धामित्यर्थः, तामेव मृगीम् अनन्य-दृष्टिः नास्ति अन्यस्मिन् विषये दृष्टिः यस्य तथाभूतः सन् अन्यत्र कुत्रापि दृष्टिमदत्त्वा इत्यर्थः, निरीक्षते। अनुष्टुप् छन्दः।

(१०५) स्थिरयौवनात्वे सुरसुन्दरीत्वं हेतुः। एतादृशविशेषणोपलक्षिता मत्प्रिया वने भ्रमन्ती यदि त्वया दृष्टा तत्तर्हि मां विरहपारावारात् समुत्तारयेत्यर्थः, तत्कथनेनेति शेषः। काननस्य गगनोज्ज्वलत्वं महत्त्वनीलत्वाद्यतिशयसाधर्म्यात्। 'भमंते' इत्यस्य 'भ्रमता' इति वा संस्कृतम्; भ्रमता त्वयेत्यर्थः। 'तह' इत्यस्य 'तथा' इति वा संस्कृतम्; तथा दृष्टा चेदित्यर्थः।

(१०६) अपि प्रश्ने। तदुपलक्षणं तस्याः चिह्नम्। पृथुलोचना आकर्णविस्तृत-नेत्रा। सुभगा प्रियदर्शना। मञ्जुभाषिणी वृत्तम्।

मवकाशमवगाहिष्ये। (१०७) [ परिक्रम्य अवलोक्य च ]। हन्त! दृष्टमुपलक्षणं तस्या मार्गस्य।—

रक्तकदम्बः सोऽयं प्रियया घर्मान्तशंसि यस्येदम्।
कुसुममसमग्रकेशर-विषममपि कृतं शिखाभरणम्॥ (१०८)

[ परिक्रम्यावलोक्य च ]। तत् किं नु खलु शिलाभेदगतं नितान्तरक्तमिदमवलोक्यते!। (१०९)—

प्रभालेपी नायं हरिहत-गजस्यामिषलवः
स्फुलिङ्गः स्यादग्नेर्गहनमभिवृष्टं पुनरिदम्।
अये! रक्ताशोकस्तवक समरागो मणिरयं!
यमुद्धर्त्तुं पूषा व्यवसित इवालम्बितकरः॥ (११०)

---

(१०७) कथमनादृत्य मद्वचनमित्यादि।—विधेर्भाग्यस्य विपर्य्ययः वैपरीत्यं परिभवस्य आस्पदं स्थानम्। अन्यमवकाशमवगाहिष्ये प्रियाप्रवृत्तिलाभार्थं स्थानान्तरं गमिष्यामीत्यर्थः।

(१०८) रक्तेति।—सोऽयं रक्तकदम्बः रक्तानि कदम्बानि तन्नामककुसुमानि यस्य सः रक्तकदम्बाख्यवृक्ष इत्यर्थः, यस्य इदं घर्मस्य ग्रीष्मस्य अन्तं शंसति सूचयतीति तत् वर्षाकालागमनसूचकम् असमग्रकेशरविषममपि असम्यक् प्रस्फुटितमपि कुसुमं प्रियया शिखाभरणं केशपाशालङ्करणं कृतम्। आर्य्या वृत्तम्।

(१०९) तत् किं नु खलु शिलाभेदगतमित्यादि।—शिलाया भेदः भग्नांशः, तद्गतं तत्स्थितं, भग्नशिलाखण्डद्वयान्तर्वर्त्तिरन्ध्रगतम् इत्यर्थः।

(११०) प्रभालेपीत्यादि।—प्रभया तेजसा लिम्पति व्याप्नोतीति प्रभालेपी प्रभापुञ्जपरिव्याप्त इत्यर्थः, अयं हरिणा सिंहेन हतस्य गजस्य आमिषलवो मांसखण्डो न; अग्नेः स्फुलिङ्गः स्यात्? अग्निस्फुलिङ्गः किमिति प्रश्न इत्यर्थः। इदं गहनं पुनः वनन्तु अभिवृष्टं सद्यो वृष्टिधारासिक्तम्, अत एवायं वह्निस्फुलिङ्गोऽपि न इत्यर्थः, वह्निस्फुलिङ्गत्वे वृष्टिधारया निर्वापितत्वसम्भवादिति भावः। (विशेषतो निरूप्य) अये! आश्चर्य्यमित्यर्थः, अयं रक्ताशोकस्तवकेन रक्ताशोककुसुमगुच्छेन समो रागो यस्य सः तथाभूतः कश्चित् मणिः! यं मणिमुद्धर्त्तुं भूमितो गृहीतुं पूषा सूर्य्यः

भवतु, आदास्ये तावत्। [ग्रहणं नाटयति]।—

पणइणि-बद्धासाइअओ
बाहाउल-णिअ-णअणओ।
गअवइ गहणे दुहिअओ
परिब्भमइ किलामिअ-वअणओ॥ (ट) (१११)

[द्विपदिकया उपसृत्य गृहीत्वा आत्मगतम्]।—

मन्दारपुष्पैरधिवासितायां
यस्याः शिखायामयमर्पणीयः।
सैव प्रिया सम्प्रति दुर्लभा मे
मैवैनमश्रूपहतं करोमि॥ (११२)

[इति उत्सृजति]।

[नेपथ्ये]। वत्स! गृह्यतां वत्स! गृह्यताम्।—

सङ्गमनीयो मणिरिह शैलसुता-चरण-रागयोनिरयम्।
आवहति धार्य्यमाणः सङ्गममाशु प्रियजनेन॥ (११३)

---

(ट) प्रणयिनी-बद्धाशार्दितको बाष्पाकुलनिजनयनकः।
गजपतिर्गहने दुःखितकः परिभ्रमति क्लान्त-वदनकः॥

---

आलम्बितकरः सन् व्यवसितः इव कृतोद्योग इव, ग्रहणाय कृतप्रयत्न इव इत्यर्थः। मणेरस्य सौरकरराशिवेष्टितत्वात् तद्ग्रहणाय सूर्य्यः प्रसारितकर इवेत्युत्प्रेक्षा। शिखरिणी वृत्तम्।

(१११) प्रणयिनीबद्धेत्यादि।—प्रणयिन्यां प्रियतमायां बद्धा लग्ना या आशा तया अर्दितः पीड़ितः। क्लान्तवदनकः मलिनमुख इत्यर्थः।

(११२) मन्दारेति।—अधिवासितायां सुगन्धीकृतायाम्। अश्रूपहतं नेत्रोदकसम्पर्केण कलुषितम्। मे इत्यत्र सम्बन्धविवक्षायां षष्ठी। इन्द्रवज्रा वृत्तम्।

(११३) सङ्गमनीय इति।—इह, इष्ट इति शेषः. अयं शैलसुताचरणरागयोनिः गौरीपादपद्मरागसम्भूतः सङ्गमनीयसंज्ञाख्यः मणिः धार्य्यमाणः अङ्गेषु परिधीयमानश्चेत् आशु शीघ्रं प्रियजनेन सङ्गमं मिलनम् आवहति जनयति। आर्य्या वृत्तम्।

राजा। [ ऊर्द्ध्वमवलोक्य ]। को माम् अनुशास्ति ? [ विलोक्य ]। कथं भगवान् मृगराजधारी ! भगवन् ! अनुगृहीतोऽहम् अमुना उपदेशेन। [ मणिमादाय ]। हंहो सङ्गममणे !—

तया विमुक्तस्य निमग्नमध्यया
भविष्यसि त्वं यदि सङ्गमाय मे।
ततः करिष्यामि भवन्तमात्मनः
शिखामणिं बालमिवेन्दुमीश्वरः ॥ ( ११४ )

[ परिक्रम्य अवलोक्य च ]। तत् किं खलु कुसुमरहितामपि लतामिमां पश्यता मया रतिरुपलभ्यते ? अथवा स्थाने मम मनो रमते ; इयं हि।—

तन्वी मेघजलार्द्र-पल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकाल-विरहाद्विश्रान्त-पुष्पोद्गमा।
चिन्तामौनमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं याता प्रकुप्येव सा ॥ (११५)

यावदस्यां प्रियानुकारिण्यां लतायां परिष्वङ्गप्रणयी भवामि।—

लए ! प्पेक्ख विस्महिअए भवामि
जइ बिहिजोए पुणु तहिं पाबिमि।

---

( ११४ ) तयेति।—निमग्नमध्यया अतिसूक्ष्मतया अन्तःप्रविष्टप्रायमध्यदेशया, तनुमध्यया इत्यर्थः। ईश्वरः शिवः, बालम् इन्दुं चन्द्रकलामिव। वंशस्थविलं वृत्तम्।

( ११५ ) तन्वीति।—तन्वी क्षीणा तथा मेघजलार्द्रपल्लवतया अश्रुभिर्धौताधरेव। स्वकालविरहात् वसन्तसमयाभावात् विश्रान्तो विरतः पुष्पोद्गमो यस्याः सा, अत एव आभरणैः शून्येव। तथा मधुलिहां भ्रमराणां शब्दैर्विना भ्रमरगुञ्जिताभावात् चिन्तामौनम् आस्थिता तूष्णीं स्थिता इव, अत एव प्रकुप्य पादपतितं माम् अवधूय अनादृत्य याता प्रस्थिता चण्डी कोपना ( "चण्डी तु पार्वत्यां हिंस्रकोपनयोषितोः" इति कोषः ) सा उर्वशी इव लक्ष्यते। शार्दूलविक्रीडितं वृत्तम्।

ता रसे वि ण करेमि णिब्भंतिं
पुणु णाइ मिल्लइ ताहं कअंतों॥ (ठ) (११६)

[ इति चर्चरिकया उपसृत्य लतामालिङ्गति। ततस्तदीयस्थानमाक्रम्यैव प्रविष्टा उर्वशी ]।

राजा। [ निमीलिताक्षः स्पर्शं नाटयित्वा ]। अये! उर्वशीगात्र-स्पर्शादिव निर्वृतं मे हृदयम्! न पुनरस्ति विश्वासः। कुतः?—

समर्थये यत् प्रथमं प्रियां प्रति
क्षणेन तन्मे परिवर्त्ततेऽन्यथा।
अतो विनिद्रे सहसा विलोचने
करोमि न स्पर्श-विभावित-प्रियः॥ (११७)

[ शनैरुन्मील्य चक्षुषी ]। कथं! सत्यमेव उर्वशी!

[ इति मूर्च्छितः पतति ]।

---

(ठ) लते! प्रेक्षस्व विन्नहृदयो भवामि
यदि विधियोगेन पुनस्तां प्राप्नोमि।
तदाऽरण्येऽपि न करोमि निर्भ्रान्तिं
पुनर्न हि प्रवेशयामि तां कृतान्ताम्॥

---

(११६) लतां प्रत्याह, लए पेक्खेति।—हे लते! प्रेक्षस्व अवलोकय, त्वमिति शेषः। अहं विन्नहृदयः व्यथितान्तःकरणो भवामि, विधेः दैवस्य योगः घटनं तेन यदि चेत् तां प्रियां पुनर्भूयः प्राप्नोमि प्राप्स्यामीत्यर्थः, तर्हि अरण्ये वने निर्भ्रान्तिं भ्रमणमपि न करोमि न करिष्यामीत्यर्थः। तथा कृतः अन्तो मत्प्राणानामिति भावः, यया तां कृतान्तां मम कृतान्तरूपिणीमित्यर्थः, यद्वा—कृतोऽन्तोऽर्थात् सुखस्य यया तां स्वविरहेण पीड़ादायिकामिति भावः, तामुर्वशीं, पुनरस्मिन्नरण्ये न प्रवेशयामि इत्यर्थः।

(११७) समर्थये इति।—यत् किञ्चित् वस्तु प्रथममादौ प्रियां प्रति समर्थये प्रियापरिज्ञापकमिति कृत्वा निश्चिनोमि, तत् तद्वस्तु क्षणेन नातिचिरमेव अन्यथा अन्यरूपेण परिवर्त्तते, क्षणमात्रेणैव तदन्यवस्तुरूपेण प्रतिभासते इत्यर्थः, अतोऽस्मात् कारणात् स्पर्शेन विभाविता अनुमिता प्रिया येन एवम्भूतोऽहं विलोचने नयने

उर्व। समस्ससदु समस्ससदु महाराओ। (ड)

राजा। [संज्ञां लब्ध्वा]। प्रिये! अद्य जीवितम्।—

त्वद्वियोगभवे चण्डि! मया तमसि मज्जता।
दिष्ट्या प्रत्युपलब्धाऽसि चेतनेव गतासुना॥ (११८)

उर्व। मरिसदु महाराओ, जं मए कोववसं गदाए अवत्यंतरं प्याविदो महाराओ। (ढ)

राजा। नाहं प्रसादयितव्यस्त्वया, त्वद्दर्शनेन प्रसन्नो मे सवाह्यान्तरात्मा। तत् कथय, कथमियन्तं कालं मया विरहिता स्थिताऽसि?।

[अनन्तरे चर्चरी]।—

मोरा-परहुअ-हंस-रहंगं
अलि-गअ-पव्वअ-सरिअ-कुरंगं।
तुज्झह कारण-रस भमंते
को ण हु पुच्छिअ मए रोअंते!॥ (ण) (११९)

---

(ड) समाश्वसितु समाश्वसितु महाराजः।

(ढ) मर्षयतु महाराजः, यत् मया कोपवशं गतया अवस्थान्तरं प्रापितो महाराजः।

(ण) मयूर-परभृत-हंस-रथाङ्ग-
मलि-गज-पर्वत-सरित्-कुरङ्गम्।
तव कारणादरण्ये भ्रमता
को न खलु पृष्टो मया रुदता!॥

---

महसा शीघ्रं विनिद्रे उन्मीलिते न करोमि, निमीलितनेत्र एव स्पर्शसुखमनुभवामि इत्यर्थः, नयने उन्मीलिते अन्यवस्तुदर्शनमिति भावः। वंशस्थविलं वृत्तम्।

(११८) त्वद्वियोगेति।—चण्डि! कोपने! त्वद्वियोगभवे तव विरहजनिते तमसि मोहे निमज्जता, मोहावृतेन इत्यर्थः, मया दिष्ट्या भाग्येन गतासुना मृतेन चेतना इव चैतन्यं जीवितमिवेति भावः, प्रत्युपलब्धाऽसि प्राप्ताऽसि। अनुष्टुप् वृत्तम्।

(११९) मयूरेति।—परभृतः कोकिलः। रथाङ्गं चक्रवाकः। तव कारणात्

उर्व। एव्वं अंतक्करण-पच्चक्खीकिद वुत्तंतो महाराओ। (त)

राजा। प्रिये! अन्तःकरणमिति न खलु अवगच्छामि।

उर्व। सुणादु महाराओ—पुरा भअवदा महासेणेण सास्सदं कुमारव्वदं गेण्हिअ अअं सअलकलुसो णाम गंधमादणकच्छो अज्झासिदो, किदा अ ट्ठिदी। (थ) (१२०)

राजा। कीदृशी?।

उर्व। "जा किल इत्थिआ इमं प्पदेसं आगमिस्सदि सा लदाभाए परिणदरूआ भविस्सदि। गोरीचरण-राअसंभवं मणीं वज्जिअ अ लदाभावं ण मुंचिस्सदि" त्ति। तदो अहं गुरुसाव-संमूढहिअआ विसुमरिद-देवदा-णिअमा कसआजण-परिहरणीअं कुमारवणं प्पविट्ठा; प्पवेसाणंतरं अ काणणोवंतवत्तिणा लदाभाएण परिणदं मे रूअं। (द)

राजा। प्रिये! सर्वमुपपन्नम्।—

(त) एवमन्तःकरण-प्रत्यक्षीकृतवृत्तान्तो महाराजः।

(थ) शृणोतु महाराजः,—पुरा भगवता महासेनेन शाश्वतं कुमारव्रतं गृहीत्वा अयं शकलकलुषो नाम गन्धमादनकच्छोऽध्यासितः, कृता च स्थितिः।

(द) "या किल स्त्री इमं प्रदेशमागमिष्यति सा लताभावे परिणतरूपा भविष्यति। गौरीचरणरागसम्भवं मणिं वर्जयित्वा च लताभावं न मोक्ष्यति" इति। ततोऽहं गुरुशापसम्मूढहृदया विस्मृतदेवतानियमा कन्यकाजनपरिहरणीयं कुमारवनं प्रविष्टा; प्रवेशानन्तरञ्च काननोपान्तवर्त्तिना लताभावेन परिणतं मे रूपम्।

त्वदन्वेषणार्थम् अरण्ये भ्रमता रुदता च मया को न पृष्टः को न जिज्ञासितः, अपि तु एतान् सर्वानेव अहं त्वद्वार्त्तामप्राक्षमित्यर्थः।

(१२०) सुणादु महाराओ इत्यादि।—महासेनेन कार्त्तिकेयेन, शाश्वतं कुमारव्रतं गृहीत्वा चिरकौमार्य्यमवलम्ब्य इत्यर्थः। शकलकलुषः पापविनाशनः। गन्धमादनस्य तदाख्यपर्वतस्य कच्छः प्रान्तदेशः। कृता च स्थितिः अयञ्च नियमः कृत इत्यर्थः।

रतिखेदसुप्तमपि मां शयने या मन्यसे प्रवासगतम्।
सा त्वमिहैतदवस्थं कथं सहेथाश्चिरवियोगम् ?॥ (१२१)

इदञ्चैतत् यथा-कथितं सङ्गमनिमित्तं पुनरुपलब्धप्रभाव-मस्माभिः। [इति मणिं दर्शयति]।

उर्व। कधं! अम्हो! संगमणोश्रो श्रश्रं मणी! श्रदो ज्जेव महाराएण श्रालिंगिदो ज्जेव प्पइदित्यम्हि संवुत्ता!। (घ)

राजा। [ललाटे मणिं सन्निवेश्य]।—

स्फुरता विच्छुरितमिदं रागेण मणेर्ललाट-निहितस्य।
श्रियमुद्वहति मुखं ते बालातप-रक्तकमलस्य॥ (१२२)

उर्व। प्पिश्रंवद! महंतो क्खु कालो श्रम्हाणं पइट्ठाणदो णिग्गदाणं, कदाइ श्रसूइस्संति प्पइदीश्रो श्रम्हाणं। (१२३) ता एहि गच्छम्ह। (न)

राजा। यदाह भवती। [इति उत्तिष्ठतः]।

---

(घ) कथम्! आश्चर्य्यम्! सङ्गमनीयोऽयं मणिः! अत एव महाराजेन आलिङ्गितैव प्रकृतिस्थाऽस्मि संवृत्ता!।

(न) प्रियंवद! महान् खलु कालः आवयोः प्रतिष्ठानात् निर्गतयोः, कदाचित असूयिष्यन्ति प्रकृतय आवाभ्याम्। तदेहि गच्छावः।

---

(१२१) रतिखेदेत्यादि।—या त्वं शयने शय्यायां रतिखेदात् सुरतक्रीडा-जनितपरिश्रमात् सुप्तमपि निद्रितमपि मां प्रवासगतं विदेशगतं मन्यसे, या त्वं निद्रावस्थायां त्वदालिङ्गनपाशादपसृतस्य परावृत्य शयानस्यापि मे विरह-दुःखमनुभवसि इत्यर्थः, सा त्वम् इहास्मिन् विजने वने एतदवस्थं चिरवियोगं कथं सहेथाः ?। आर्य्या वृत्तम्।

(१२२) स्फुरतेति।—स्फुरता दीप्यमानेन। विच्छुरितं रञ्जितम्। बालेति। —बालातपेन नवोदितसूर्य्यकिरणेन रक्तस्य अरुणवर्णस्य कमलस्य पद्मस्य। आर्य्या वृत्तम्।

(१२३) प्रियंवदेत्यादि।—प्रतिष्ठानान्निर्गतयोः तदाख्यराजधानीतः प्रस्थितयोः। प्रकृतयः प्रजाः असूयिष्यन्ति क्रुद्धाः भविष्यन्ति।

उर्व। अध कधं उण महाराओ गंतुं इच्छदि ?। (प)

राजा। अचिरप्रभा-विलसितैः पताकिना
सुरकार्मुकाभिनव-चित्र-शोभिना।
गमितेन खेलगमने ! विमानतां
नय मां नवेन वसतिं पयोमुचा॥ (१२४)

प्पाविअ-सहअरि-संगओ पुलअ-प्पसाहिअ-अंगओ।
सेच्छा-प्पत्त-बिमाणओ बिहरइ हंस-जुआणओ॥ (फ) (१२५)

[इति खण्डधारया निष्क्रान्तौ]।

चतुर्थोऽङ्कः समाप्तः।

---

# अथ पञ्चमोऽङ्कः।

[ततः प्रविशति हृष्टो (१) विदूषकः]।

विदू। ही ही! भो! भो! दिट्ठिआ चिरस्स कालस्स उव्वसी-

---

(प) अथ कथं पुनर्महाराजो गन्तुमिच्छति ?।

(फ) प्राप्त-सहचरी-सङ्गकः पुलकप्रसाधिताङ्गकः।
स्वेच्छा-प्राप्तविमानको विहरति हंसयुवकः॥

---

(१२४) अचिरेति।—हे खेलगमने ! लीलाविलासान्वितगमने ! उर्वशि ! अचिरप्रभाणां विद्युतां विलसितैः दीप्तिभिः पताकिना पताकान्वितवत् प्रतीयमानेन। सुरकार्मुकमिव अभिनवं नूतनं चित्रम् आलेख्यं तेन शोभते यस्तेन। पयोमुचा मेघेन। मञ्जुभाषिणी वृत्तम।

(१२५) प्राप्तेति।—प्रसाधितं भूषितम्। स्वेच्छयैव प्राप्तं विमानं यानं येन सः, अभिलाषोपनीतव्योमयानः, यद्वा—स्वेच्छया ईश्वरेच्छया प्राप्तो विशिष्टो मानः प्रियासङ्गालिङ्गनादिजन्य उत्कर्षो येन तथोक्तः, हंसयुवकः विहरति स्वेच्छया परिभ्रमतीत्यर्थः।

---

(१) उर्वशीसहितराजागमनतो हृष्टः।

सहाओ तत्थभवं राआ णंदण-वण-प्पमुहेसुं प्पदेसेसुं विहरिअ प्पड़िणिउत्तो णअरं। दाणिं सकज्जाणुसासणे प्पइदिमंडलं अणुरञ्जअंतो रज्जं करेदि। आं! संताणअं वज्जिअ ण से किंपि सोअणोअं। अज्ज तिधिविसेसो त्ति भअवदोणं गंगा-जउणाणं सलिलेसुं देईए सह किदाहिसेओ संपदं उअआरिअं प्पविट्टो; ता जाव अलंकरणोअमाणस्स अंगाणु-लेअण-मल्लभाई भादुओ होमि। (क) (२)

[नेपथ्ये]। हद्धो! हद्धो! एसो जलंत रत्त-तालवेंट-पिधाणं णिक्खिविअ णोअमाणो अच्छरा-विरहिदेण मउलि-रअणदाए प्पओइदो मणी आमिससंकिणा गिद्धेण आक्खित्तो। (ख) (३)

(क) हो हो! भोः! भोः! दिष्ट्या चिरस्य कालस्य उर्वशीसहायस्तत्रभवान् राजा नन्दनवन-प्रमुखेषु प्रदेशेषु विहृत्य प्रतिनिवृत्तो नगरम्। इदानीं स्वकार्य्यानुशासने प्रकृतिमण्डलमनुरञ्जयन् राज्यं करोति। आं! सन्तानकं वर्जयित्वा नास्य किमपि शोचनीयम्। अद्य तिथिविशेष इति भगवत्योर्गङ्गायमुनयोः सलिलेषु देव्या सह कृताभिषेकः साम्प्रतमुपकारिकां प्रविष्टः; तत् यावदलङ्क्रियमाणस्याङ्गानुलेपनमाल्य-भागी भ्राता भवामि।

(ख) हा धिक्! हा धिक्! एष ज्वलन् रक्ततालवृन्तपिधानं निक्षिप्य नीयमानोऽप्सरो-विरहितेन मौलिरत्नतायां प्रयोजितो मणिः आमिषशङ्किना गृध्रेण आक्षिप्तः।

(२) सन्तानकमपत्यं, निरपत्यता एव अस्य शोचनीया, अन्यथा सर्वमेव प्रशस्यमिति भावः। कृताभिषेकः कृतस्नानः। उपकारिकां राजभवनम्। अलङ्क्रियमाणस्य राज्ञः, अङ्गानुलेपनमाल्यभागी राज्ञा व्यवहृतचन्दनमाल्यावशिष्ट-चन्दनमाल्यभागी।

(३) हद्धो! इत्यादि।—रक्ततालवृन्तपिधानं रक्ततालवृन्तरूपावरणं निक्षिप्य अपसार्य्य। अप्सरसा उर्वश्या विरहितेन राज्ञा मौलिरत्नतायां प्रयोजितः चूड़ामणिः कृत इत्यर्थः।

विदू। [आकर्ण्य]। अच्चाहिदं! अच्चाहिदं! (४) परम-बहुमदो क्खु सो वअस्सस्स संगमणीओ णाम चूड़ामणी। अदो क्खु असमत्तणेवच्छो ज्जेव तत्तभवं आसणादो ज्जेव उट्ठिदो; ता पासपलिवत्तो होमि। (ग)

[इति निष्क्रान्तः]।

[प्रवेशकः]। (५)

[ततः प्रविशति राजा सूतः कञ्चुकि-रेचकौ (६) परिजनश्च]।

राजा। रेचक! रेचक!—

आत्मनो बधमाहर्त्ता क्वासौ विहग-तस्करः।
येन तत्प्रथमं स्तेयं गोप्तुरेव गृहे कृतम्?॥ (७)

किरातः। एसो अग्गमुह-लग्ग-हेमसुत्तेण मणिणा अणुरञ्ज-अंतो विअ आआसं परिब्भमदि। (घ)

राजा। पश्यामि एनम्।—

असौ मुखालम्बित-हेमसूत्रं
बिभ्रन्मणिं मण्डल शीघ्रचारः।

---

(ग) अत्याहितम्! अत्याहितम्! परमबहुमतः खलु स वयस्यस्य सङ्गमनीयो नाम चूड़ामणिः। अतः खलु असमाप्तनेपथ्य एव तत्रभवान् आसनादेव उत्थितः; तत् पार्श्वपरिवर्त्ती भवामि।

(घ) एषोऽग्रमुखलग्न-हेमसूत्रेण मणिना अनुरञ्जयन्निव आकाशं परिभ्रमति।

---

(४) "अत्याहितं महाभीतिः कर्म जीवानपेक्षि च" इत्यमरः।

(५) प्रवेशक इति।—तल्लक्षणं यथा दर्पणे।—"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥" इति।

(६) रेचक इति किरातस्य नाम।

(७) आत्मन इति।—बधम् आहर्त्ता आहरणकारी, स्वकर्मणा आत्मविनाशकारी इत्यर्थः, विहगश्चासौ तस्करश्चेति विहगतस्करः। येन गोप्तुरेव रक्षकस्यैव गृहे तद्दैव प्रथमं स्तेयं चौर्य्यं कृतम्। अनुष्टुप् वृत्तम्।

अलात-चक्र-प्रतिमं विहङ्ग-
स्तद्रागलेखा-वलयं तनोति ॥ (८)

कथय, किं खलु अत्र कर्त्तव्यम् ?।

विदू। [उपेत्य]। भो! अलं एत्थ घिणाए; एसो अबराही सासणीयो। (ङ)

राजा। सम्यगाह भवान्। धनुर्धनुस्तावत्।

परिजनः। जं भट्टा आसवेदि। (च)

[इति निष्क्रान्तः]।

राजा। न दृश्यते हि विहगाधमः।

विदू। इदो इदो दक्खिणंतरेण चलिदो सउणहदासो। (छ)

राजा। [दृष्ट्वा]। इदानीम्।—

प्रभापल्लवितेनासौ करोति मणिना खगः।
अशोकस्तवकेनेव दिङ्मुखस्यावतंसकम् ॥ (९)

यवनी। [धनुर्हस्ता प्रविश्य]। भट्टा! एदं ससरं चावं। (ज)

राजा। किम् इदानीं धनुषा? बाणपथातीतः क्रव्यभोजनः। तथा हि।—

(ङ) भोः! अलमत्र घृणया; एषोऽपराधी शासनीयः।

(च) यत् भर्त्ता आज्ञापयति।

(छ) इत इतो दक्षिणान्तरेण चलितः शकुनहताशः।

(ज) भर्त्तः! इदं सशरं चापम्।

(८) असाविति।—मण्डलशीघ्रचारः मण्डलगत्या शीघ्रगामी असौ विहङ्गः मुखे आलम्बितं लम्बमानं हेमसूत्रं यस्य तं तथाभूतं मणिं बिभ्रत् धारयन् अलातचक्रप्रतिमं दग्धाङ्गारभ्रमिजनितमण्डलमिव तस्य मणेः रागस्य या लेखा तस्या वलयं मण्डलं तनोति जनयति। उपजातिः वृत्तम्।

(९) प्रभेति।—असौ खगः प्रभया भासा पल्लवितेन विस्तृतेन सञ्जातपल्लवेन

आभाति मणिविशेषो दूरमिदानीं पतत्त्रिणा नीतः।
नक्तमिव लोहिताङ्गः पुरुष घनच्छेद-सम्पृक्तः॥ (१०)

आर्य्य तालव्य!। (११)

कञ्चुकी। आज्ञापयतु देवः।

राजा। मद्वचनादुच्यन्तां नागरिकाः,—"सायं निवास-वृक्षाग्रे विचीयतां विहगाधमः।"

कञ्चु। यथा आज्ञापयति देवः।

[इति निष्क्रान्तः]।

विदू। भो! विस्समीअदु भवं संपदं। कहिं गदो मणि-कुंभीलओ (१२) भवदो सासणादो मुंचिस्सदि?। (क)

[इति उपविशतः]।

राजा। वयस्य!—

रत्नमिति न मे तस्मिन् मणौ प्रयासो विहङ्गमोत्क्षिप्ते।
प्रियया तेनास्मि सखे! सङ्गमनीयेन सङ्गमितः॥ (१३)

---

(क) भोः! विश्राम्यतु भवान् साम्प्रतम्। कुत्र गतो मणिकुम्भिलको भवतः शासनात् मोक्ष्यति?।

---

वा अशोकस्तवकेनेव तद्वत् प्रतीयमानेन इत्यर्थः। दिङ्मुखस्य अवतंसकं शिरोभूषणं करोति। अनुष्टुप् वृत्तम्।

(१०) आभाति मणिविशेष इत्यादि।—इदानीं पतत्त्रिणा पक्षिणा दूरं नीतः मणिविशेषः महामणिः, नक्तं रात्रौ, घनच्छेदसम्पृक्तो मेघखण्डाच्छादितः लोहिताङ्गः पुरुषः मङ्गलग्रह इव ("लोहिताङ्गो महीसुतः" इत्यमरः) आभाति शोभते। पुरुष इत्यत्र विभक्तिलोपश्छान्दसः। आर्य्या वृत्तम्।

(११) तालव्य इति कञ्चुकिनामधेयम्।

(१२) "कुम्भिलकां गण्डपदस्तस्करश्च मलिम्लुचः" इति कोषः।

(१३) रत्नमितीति।—विहङ्गमेन पक्षिणा, उत्क्षिप्ते ऊर्द्ध्वं नीते। सङ्गमनीयेन रत्नाम्ना। सङ्गमितः सङ्गं प्रापितः। आर्य्या वृत्तम्।

[ ततः प्रविशति शरं मणिमादाय कञ्चुकी ]।

कञ्चुकी। जयति जयति देवः।—

अनेन निर्भिन्नतनुः स वध्यो रोषेण ते मार्गणतां गतेन।
प्राप्तापराधोचितमन्तरीक्षात् समौलिरत्नः पतितः पतत्त्री॥ (१४)

सर्वे। [ विस्मयं रूपयन्ति ]।

कञ्चु। अभिप्रक्षालितोऽयं (१५) मणिः कस्मै प्रदीयताम्?।

राजा। रैवतक! गच्छ, कोषपेटके (१६) स्थापयैनम्।

किरातः। जं भट्टा आणवेदि त्ति। (ञ)

[ इति मणिमादाय निष्क्रान्तः ]।

राजा। [ तालव्यं प्रति ]। आर्य्य! जानाति भवान् कस्य अयं बाण इति?।

कञ्चु। नामाङ्कितो दृश्यते; नात्र मे वर्णविभावनसहा दृष्टिः।

राजा। तदुपश्लेषय शरं यावत् निरूपयामि।

विदू। किं भवं विआरेदि?। (ट)

राजा। शृणु तावत् प्रहर्त्तुर्नामाक्षराणि।

विदू। अवहिदोम्हि। (ठ)

---

(ञ) यद्भर्त्ता आज्ञापयति इति।

(ट) किं भवान् विचारयति?।

(ठ) अवहितोऽस्मि।

---

(१४) अनेनेति।—वधमर्हतीति वध्यः स पतत्त्री पक्षी मार्गणतां गतेन बाणत्वं प्राप्तेन तव अनेन रोषेण निर्भिन्नतनुः विदारितशरीरः सन्, प्राप्तापराधोचितं यथा स्यात् तथा प्राप्तचौर्य्यापराधसदृशदण्डं यथा तथेत्यर्थः, अन्तरीक्षात् समौलिरत्नः पतितः। अत्र क्रोधस्यैव शरत्वसम्भावनयोत्प्रेक्षालङ्कारः। उपजातिः वृत्तम्।

(१५) अभिप्रक्षालितः परिधौतः।

(१६) कोषपेटके भाण्डागारान्तर्वर्त्तिनि वंशादिनिर्मिते पेटिकाख्यपात्रे।

राजा । [ वाचयति ] ।—

उर्वशी-सम्भवस्यायमैलसूनोर्धनुष्मतः ।
कुमारस्यायुषो बाणः संहर्त्ता द्विषदायुषाम् ॥ ( १७ )

विदू । दिट्ठिआ संताणेण वड्ढदि भवं । (ड)

राजा । कथमेतत् ! सखे ! अन्यत्र नैमिषेयसत्रादवियुक्तोऽहमुर्वश्या ; (१८) न कदाचिदपि तत्रभवती गर्भाविर्भूत-दोहदा अपि उपलक्षिता ; कुत एव प्रसूतिः ! किन्तु,—

आनील-चूचुकाग्रं लवलीफल-पाण्डुराननच्छायम् ।
कतिचिदहानि शरीरं श्लथवलयमिवाभवत्तस्याः ॥ ( १९ )

विदू । मा भवं माणुसीधम्मं उव्वसीए संभावेदु । पभाव-गूढाइं देवचरिदाइं । ( ढ )

राजा । अस्तु तावदेवं यथाऽऽह भवान् । पुत्रसंवरणे (२०) किमिव कारणं तस्याः ? ।

---

( ड ) दिष्ट्या सन्तानेन वर्द्धते भवान् ।

( ढ ) मा भवान् मानुषीधर्मम् उर्वश्यां सम्भावयतु । प्रभावगूढानि देव-चरितानि ।

---

( १७ ) उर्वशीति ।—अयं कुमारस्य युवराजस्य आयुषः आयुर्नामधेयस्य बाणः । आयुषः किम्भूतस्य ? उर्वशीसम्भवस्य उर्वशीगर्भजातस्य, ऐलसूनोः इलानाम्नी बुधेन परिगृहीता मनोः कन्या तस्या अपत्यं पुमान् ऐलः पुरूरवाः, तस्य सूनोः पुत्रस्य, तथा धनुष्मतः प्रशस्तधनुर्धारिणः इत्यर्थः । बाणः किम्भूतः ? द्विषतां शत्रूणां [ "द्विषोऽमित्रे" (३।४।१३१पा० ) इति शतृ; ] आयुषां संहर्त्ता । अनुष्टुप् वृत्तम् ।

( १८ ) "अनिमिष्यावियुक्तोऽहमुर्वश्या" इति पाठे—अनिमिषी देववनिता ।

( १९ ) आनीलेति ।—आनीलम् ईषत् कृष्णवर्णं चूचुकाग्रं कुचाग्रदेशः यत्र तादृशम्, "आविलपयोधराग्रम्" इति पाठे—आविलं मलिनम् । लवली 'नोयाड़' इति भाषा, तस्याः फलवत् पाण्डुरा आननच्छाया यत्र तादृशम् । श्लथं शिथिलं वलयं करभूषणं यत्र तादृशम् । आर्य्या वृत्तम् ।

( २० ) संवरणं अङ्गीपनमिति यावत् ।

विदू। मा बुड्ढिं मं राआ परिहरिस्सदि त्ति। (ण)

राजा। कृतं परिहासेन; चिन्त्यताम्।

विदू। को देवरहस्साइं चिंतिस्सदि ?। (त)

कञ्चुकी। [प्रविश्य]। जयति जयति देवः। देव! एषा खलु च्यवनाश्रमात् भार्गवी कुमारमादाय आयाता तापसी देवं द्रष्टुमिच्छति।

राजा। उभयमपि अविलम्बितं प्रवेशय।

कञ्चुकी। तथा। [इति निर्गम्य तापसीसहितं कुमारमादाय प्रविष्टः]।

विदू। णं क्खु एसो खत्तिअ-कुमारो, जस्स णामांकिदो गिद्धलक्खवेही णाराओ (२१) उअलद्धो। तधा हि भवदो बहु अणुकरेदि। (थ)

राजा। एवमेतत्।—

वाष्पायते निपतिता मम दृष्टिरस्मिन्
वात्सल्यबन्धि हृदयं मनसः प्रसादः।
सञ्जातवेपथुभिरुज्झितधैर्य्यवृत्त-
मिच्छामि चैनमदयं परिरब्धुमङ्गैः॥ (२२)

(ण) मा वृद्धां मां राजा परिहरिष्यतीति।

(त) को देवरहस्यानि चिन्तयिष्यति ?।

(थ) ननु खलु एष क्षत्रियकुमारः, यस्य नामाङ्कितो गृध्रलक्ष्यवेधी नाराच उपलब्धः। तथा हि भवतो बहु अनुकरोति।

(२१) नाराचः बाणभेदः।

(२२) वाष्पायते इति।—मम दृष्टिरस्मिन् बालके निपतिता सती वाष्पायते वाष्पमुद्वमति इत्यर्थः, प्रगाढ़वाष्पोदयेन आकुलीभवतीति यावत्। हृदयं चेतः वात्सल्यं बध्नातीति वात्सल्यबन्धि प्रेमातिशय्ययुक्तम्। मनसः प्रसादः; तथा अहम् उज्झितं त्यक्तं धैर्य्यवृत्तं येन तादृशं चपलमित्यर्थः एनं कुमारम् अदयं निर्दयं यथा स्यात तथा सञ्जातः वेपथुभिः कम्पमानैः अङ्गैः परिरब्धुम् आलिङ्गितुमिच्छामि। वसन्ततिलकं वृत्तम्।

कञ्चुकी। भगवति! एवं स्थीयताम्।

तापसीकुमारौ। [ यथोचितं स्थितौ ]।

राजा। [ उपसृत्य ]। भगवति! अभिवादये।

ताप। महाराश्र! सोमवंसं धारश्रंतो होहि। [ आत्मगतम् ]। भो! इमिणा अकधिदोवि विसादो ज्जेव इमस्स राएसिणो अत्तणो आउसो अ ओरसो संबंधो। [ प्रकाशं कुमारं प्रति ]। जाद! प्पणम गुरुं। ( द )

कुमारः। [ वाष्पगर्भमञ्जलिं बद्धा प्रणमति ]।

राजा। वत्स! आयुष्मान् भव।

कुमा। [ स्पर्शं रूपयित्वा स्वगतम् ]।—

यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोऽहमस्येति।
उत्सङ्गे वृद्धानां गुरुषु भवेत् कीदृशः स्नेहः!॥ ( २३ )

राजा। भगवति! किम् आगमन-प्रयोजनम्?।

ताप। सुणादु महाराश्रो,—एसो दीहाऊ आऊ उव्वसीए जादमेत्तो ज्जेव किंपि णिमित्तं अवेक्खिअ मम हत्थे णासीकिदो। जधा ( जं ) खत्तिअस्स कुलीणस्स जादकम्मादिविहाणं, तं से तत्तभवदा चवणेण सव्वं अणुट्ठिदं; दाणिं गिहीदविज्जो धनुव्वेए अ विणीदो। ( ध ) ( २४ )

---

( द ) महाराज! सोमवंशं धारयन् भव। भोः! अनेन अकथितोऽपि विज्ञात एवास्य राजर्षेरात्मन आयुषश्च औरसः सम्बन्धः। जात! प्रणम गुरुम्।

( ध ) शृणोतु महाराजः,—एष दीर्घायुरायुरुर्वश्या जातमात्र एव किमपि निमित्तम् अवेक्ष्य मम हस्ते न्यासीकृतः। यथा ( यत् ) क्षत्रियस्य कुलीनस्य जात-

---

( २३ ) यदि हार्दमिदमित्यादि।—अयं मम पिता, अहमस्य सुतः इति, वचनमिति शेषः, श्रुत्वैव यदि इदम् ईदृशं, हार्दं स्नेहः, ( "प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः ), सञ्जायेत इति शेषः, अनिर्वचनीयानन्दोदयः स्यादिति भावः, तदा उत्सङ्गे वृद्धानां क्रोड़े वृद्धिं गतानामात्मजानां गुरुषु पित्रादिषु कीदृशः स्नेहो भवेत्! इति विचारयितुमपि न शक्नोमीति भावः। आर्य्या वृत्तम्।

राजा। सनाथः ( २५ ) खलु संवृत्तः।

ताप। अज्ज पुप्फ-फल-समिध्-कुस-णिमित्तं इसिकुमार-एहिं सह गदेण इमिणा अस्समवास-विरुद्धं समाअरिदं। (न)

विदू। कधं विअ ?। (प)

ताप। गहिदामिसो किल गिद्धो अस्सम-पादव-सिहरे णिलीयमाणो लक्खीकिदो वाणस्स। (फ)

राजा। ततस्ततः ?।

ताप। तदो उअलद्ध-वुत्तंतेण भअवदा चवणेण अहं समादिट्टा,—"णिज्जादेहि एदं उव्वसीहत्थे णासं" त्ति। ( २६ ) ता इच्छामि उव्वसीं पेक्खिदुं। ( ब )

राजा। तेन हि आसनमनुगृह्णातु भगवती।

[ प्रेष्योपनीतयोरासनयोरुपविष्टौ ]।

---

कर्मादिविधानं, तदस्य तत्रभवता च्यवनेन सर्वमनुष्ठितम्; इदानीं गृहीतविद्यो धनुर्वेदे च विनीतः।

( न ) अद्य पुष्प-फल-समित्-कुश-निमित्तम् ऋषिकुमारकैः सह गतेन अनेन आश्रमवासविरुद्धं समाचरितम्।

( प ) कथमिव ?।

( फ ) गृहीतामिषः किल गृध्रः आश्रमपादपशिखरे निलीयमानो लक्ष्यीकृतो बाणस्य।

( ब ) तत उपलब्ध-वृत्तान्तेन भगवता च्यवनेन अहं समादिष्टा,—"निर्यातयैनम् उर्वशीहस्ते न्यासम" इति। तदिच्छामि उर्वशीं प्रेक्षितुम।

---

( २४ ) विनीतः शिक्षितः।

( २५ ) सनाथः सप्रभुकः प्राप्तोपयुक्ताश्रय इत्यर्थः, धनुर्वेदो हि इदानीमुपयुक्ताश्रयप्राप्त्या नाथवान् सञ्जात इति भावः।

( २६ ) निर्यातय प्रत्यर्पय। "दाने न्यासार्पणे वैरशुद्धौ निर्यातनं मतम्" इति मुक्तावली। न्यासं निक्षेपम्। "णिज्जादेहि" इत्यत्र "णिप्पादेहि" ( प्रा ) "निष्पादय" ( सं ) इति पाठे—निक्षिप इत्यर्थः।

राजा। आर्य्य तालव्य ! आहूयताम् (२७) उर्वशी ।

कञ्चु। यदाज्ञापयति देवः । [ इति निष्क्रान्तः ]।

राजा। [ कुमारमवलोक्य ]। एह्येहि वत्स !—

सर्वाङ्गीणः स्पर्शः सुतस्य किल तेन मामुपनतेन ।
प्रह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ॥ (२८)

ताप। जाद ! णंदेहि पिदरं । (भ)

कुमारः। [ राजानमुपसर्पति ]।

राजा। [ आलिङ्ग्य ]। वत्स ! प्रियसखं ब्राह्मणमविशङ्कितो वन्दस्व ।

विदू। किं त्ति मे संकदि ? अस्सम-वास-परिचिदा ण किं एदस्स साहामिआ ?। (म) (२९)

कुमा। [ सस्मितम् ]। तात ! वन्दे ।

विदू। सोत्थि भवदो, वड्ढदु भवं । (य)

[ ततः प्रविशति उर्वशी कञ्चुकी च ]।

कञ्चु। इत इतो भवती ।

---

(भ) जात ! नन्दय पितरम् ।

(म) किमिति मे शङ्कते ? आश्रमवासपरिचिताः न किम् एतस्य शाखामृगाः ?।

(य) स्वस्ति भवते, वर्द्धतां भवान् ।

---

(२७) "आहूयताम्" इत्यत्र "उच्यताम्" इति क्वचित् पाठः ।

(२८) सर्वाङ्गीण इति ।—सुतस्य तनयस्य स्पर्शः सर्वाङ्गीणः किल निश्चये, सर्वाङ्गव्यापी इत्यर्थः, सर्वदेहे पुलकसञ्चारकारीति यावत् । उपनतेन दत्तेनेत्यर्थः, तेन स्पर्शेन चन्द्रकरश्चन्द्रकान्तमिव मां प्रह्लादयस्व मामानन्दितं कुरु इत्यर्थः । अत्र उपमालङ्कारः, आर्य्या वृत्तञ्च ।

(२९) आश्रमवासकालेऽनेन बहवो वानरा दृष्टाः, तदद्य मामालोक्य कथं शङ्किष्यते ? येन हि बहुशो मर्कटाः प्रत्यक्षीकृताः, तस्य किं मद्दर्शनेन भीतिरुत्पत्स्यते ?।

उर्वशी। [प्रविश्य अवलोक्य च]। को णु क्खु एसो कणअ-बोठीबविट्टो महाराएण संजमीअमाण सिहंडश्रो चिट्ठदि? (३०) [तापसीं दृष्ट्वा]। अम्हहे! सच्चवदीसहिदो पुत्तश्रो मे श्राऊ! महंतो क्खु संवुत्तो!। (र)

राजा। [विलोक्य]। वत्स!—

इयं ते जननी प्राप्ता त्वदालोकनतत्परा।
स्नेहप्रस्नव-निर्भिन्नमुद्वहन्ती स्तनांशुकम्॥ (३१)

ताप। जाद! एहि, पच्चुवगच्छ मादरं। (ल)

[इति कुमारेण सह उर्वशीमुपसर्पति]।

उर्व। अज्जे! पादवंदणं करेमि। (व)

ताप। बच्छे! भत्तुणो बहुमदा होहि। (श)

कुमा। अम्ब! अभिवादये।

उर्व। बच्छ! पिदरं आराधअंतो होहि। [राजानं प्रति]। जेदु जेदु महाराश्रो। (ष)

राजा। स्वागतं पुत्त्रवत्यै? इत आस्यताम्।

---

(र) को नु खलु एष कनकपीठोपविष्टो महाराजेन संयम्यमानशिखण्डकस्तिष्ठति! अहो! सत्यवतीसहितः पुत्त्रको मे आयुः! महान् खलु संवृत्तः!।

(ल) जात! एहि, प्रत्युपगच्छ मातरम्।

(व) आर्य्ये! पादवन्दनं करोमि।

(श) वत्से! भर्त्तुर्बहुमता भव।

(ष) वत्स! पितरमाराधयन् भव। जयति जयति महाराजः।

---

(३०) महाराजेन संयम्यमानशिखण्डकः महाराजेन सम्बध्यमानकाकपक्षः, विन्यस्यमानशिखण्डक इत्यर्थो वा, ("काकपक्षः शिखण्डकः" इत्यमरः)।

(३१) इयमिति।—वत्स! त्वदालोकनतत्परा अत एव स्नेहात् यः प्रस्नवः दुग्धक्षरणं तेन निर्भिन्नं स्तनांशुकमुद्वहन्ती धारयन्ती इयं ते जननी उर्वशी प्राप्ता। अनुष्टुप् वृत्तम्।

उर्व। अज्जा! उअबिसध। (स)

सर्वे। [यथोचितम् उपविष्टाः]।

ताप। बच्छे! गिहीदबिज्जो आऊ संपदं आउधकबचारुहो संबुत्तो। एसो भत्तुणो समक्खं णिज्जादिदो सहिहत्थणिक्खेबो (मए तुह हत्थे णिक्खेबो) ता तुम्मेहिं बिसज्जिदं अत्ताणं इच्छामि; उअरुज्झइ मे अस्सम (बास) धम्मो। (ह)। (३२)

उर्व। कामं चिरस्स (पेक्खिअ बिरहुक्कंठिदम्हि ण उण धम्माबरोहे बट्टिदुं) अज्जउत्तं पेक्खिअ अबहिदहिअएण जुज्जदि पुणो अस्समधम्मं बिभाबिदुं। ता गच्छदु अज्जा पुणो बि दंसणाअ। (च)

राजा। आर्य्ये! तत्रभवते च्यवनाय मम प्रणामम् आवेदयिष्यसि।

ताप। एव्वं भोदु। (क)

कुमा। आर्य्ये! सत्यमेव निवर्त्तनम्? इतो मामपि नेतुमर्हसि।

(स) आर्य्याः! उपविशत।

(ह) वत्से! गृहीतविद्यः आयुः साम्प्रतम् आयुधकवचार्हः संवृत्तः। एष भर्त्तुः समक्षं निर्य्यातितः सखीहस्तनिक्षेपः (मया तव हस्ते निक्षेपः) तत् युष्माभिर्विसर्जितमात्मानमिच्छामि; उपरुध्यते मे आश्रम (वास) धर्मः।

(च) कामं चिरस्य (प्रेक्ष्य विरहोत्कण्ठिताऽस्मि न पुनर्धर्मावरोधे वर्त्तितुम्) आर्य्यपुत्रं प्रेक्ष्यावहितहृदयेन युज्यते पुनराश्रमधर्म्मं विभावयितुम्। तत् गच्छतु आर्य्या पुनरपि दर्शनाय।

(क) एवं भवतु।

(३२) विसर्ज्जितमात्मानमिच्छामि।—विसर्ज्जितं त्यक्तं, गमनाय अनुमतमित्यर्थः, भवदनुज्ञया पुनः वनं गन्तुमिच्छामि इति भावः। आश्रमधर्मं उपरुध्यते बहुक्षणमाश्रमपरित्यागात् आश्रमोचितधर्मस्य व्याघातो भवति इत्यर्थः।

राजा। अयि वत्स! उषितं त्वया पूर्वस्मिन्नाश्रमपदे, तव द्वितीयमपि अध्यासितुं समयः। (३३)

ताप। जाद! गुरुणो वअणं अणुचिट्ठ। (ख)

कुमा। तेन हि।—

यः सुप्तवान् मदङ्के शिखण्ड-कण्डूयनोपलब्धसुखः।
तं मे जातकलापं प्रेषय शितिकण्ठकं शिखिनम्॥ (३४)

ताप। एव्वं करेमि। (ग)

उर्व। भअवदि! पादवंदणं करेमि। (घ)

राजा। भगवति! प्रणमामि।

ताप। सोत्थि सव्वाणं (भोदु तुह्माणं)। (ङ)

[इति निष्क्रान्ता]।

राजा। सुन्दरि!—

अद्याहं पुत्त्रिणामग्र्यः सुपुत्त्रेण तवामुना।
पौलोमीसम्भवेनेव जयन्तेन पुरन्दरः॥ (३५)

उर्वशी। [स्मृत्वा रोदिति]।

---

(ख) जात! गुरोर्वचनमनुतिष्ठ।

(ग) एवं करोमि।

(घ) भगवति! पादवन्दनं करोमि।

(ङ) स्वस्ति सर्वेभ्यः। (भवतु युष्मभ्यम्)।

---

(३३) त्वया पूर्वस्मिन् आश्रमपदे उषितं त्वया ब्रह्मचर्य्याश्रमवासः कृत इत्यर्थः। इदानीं तव द्वितीयमपि अध्यासितुं समयः गार्हस्थ्याश्रमप्रवेशावसरः संवृत्त इत्यर्थः।

(३४) य इति।—मदङ्के मम क्रोड़े। शिखण्डकण्डूयनेन चूड़ाकण्डूयन-व्यापारेण उपलब्धं सुखं येन तादृशः। जातकलापम् उद्गतपिच्छम्। शितिकण्ठकं नीलकण्ठम्। आर्य्या वृत्तम्।

(३५) अद्येति।—पुत्त्रिणां पुत्त्रवतामग्र्यः मुख्यः श्रेष्ठः इत्यर्थः। पौलोमी-सम्भवेन शचीगर्भजातेन, जयन्तेन तदाख्यदेवेन्द्रतनयेन। अनुष्टुप् वृत्तम्।

विदू। भो! किं णु क्खु संपदं तत्थभोदी अस्सुमुही संवुत्ता?। (च)

राजा।—

किं सुन्दरि! प्ररुदिताऽसि ममोपनीते
वंशस्थितेरधिगमात् स्फुरति प्रमोदे।
पीनस्तनोपरि निपातिभिरर्पयन्ती
मुक्तावली-विरचनं पुनरुक्तमस्रैः?॥ (२६)

उर्व। सुणादु महाराओ,—पढ़मं उण पुत्त-दंसण-समुत्थिदेण आणंदेण बिसुमरिदम्हि; दाणिं महेंदसंकित्तणेण सो अवधी मम हिअएण सुमरिदो। (छ)

राजा। कथ्यतां समयः।

उर्व। सुणादु महाराओ,—अहं पुरा महाराअ-गहिद-हिअआ गुरुसाव-संमूढ़ा महेंदेण अवधिं कदुअ अब्भणुसादा। (ज)

(च) भोः! किं नु खलु साम्प्रतं तत्रभवती अश्रुमुखी संवृत्ता?।

(छ) शृणोतु महाराजः,—प्रथमं पुनः पुत्रदर्शनसमुत्थितेन आनन्देन विस्मृताऽस्मि; इदानीं महेन्द्रसङ्कीर्त्तनेन सोऽवधिः मम हृदयेन स्मारितः।

(ज) शृणोतु महाराजः,—अहं पुरा महाराजगृहीतहृदया गुरुशापसम्मूढ़ा महेन्द्रेण अवधिं कृत्वा अभ्यनुज्ञाता।

(२६) किं सुन्दरीत्यादि।—हे सुन्दरि! वंशस्य कुलस्य ("वंशो वेणौ कुले वर्गे पृष्ठस्यावयवास्थनि। नासाविवरदेशेऽपि वाद्यभाण्डान्तरेऽपि च॥" इति कोषः) स्थितिः रक्षा येन तादृशस्य पुत्रस्य अधिगमात् लाभात्, पुत्रेण सह मेलनात् इत्यर्थः, उपनीते मम प्रमोदे स्फुरति वर्द्धमाने सति पीनस्तनोपरि निपातिभिः अस्रैर्नेत्रजलैः पुनरुक्तं यथा स्यात् तथा मुक्तावलीविरचनम् अर्पयन्ती मुक्ताहारविन्यासं कृतवती, मुक्ताफलसदृशानि अश्रूणि पातयन्ती इत्यर्थः, किं प्ररुदिताऽसि? पुत्रसमागमजनिते आनन्दावसरे किं शोकस्य कारणम्? इति भावः। वसन्ततिलकं वृत्तम्।

राजा। कथय किमिति ?।

उर्व। "जदा सो मम प्पिअसही राएसी तुइ समुप्पन्नस्स पुत्तअस्स मुहं पेक्खिस्सदि, तदा मम समीवं तुए आअंतव्वं"त्ति। तदा मए महाराअ-विओअ-भीरुदाए ( जातमेत्तो एव्व विज्जागमणिमित्तं अ ) ( चिरआल-संगमणिमित्तं अ ) भअवदो चवणस्स अस्समपदे एसो पुत्तओ अज्जाए सच्चवदीए हत्थे अत्तणा णिक्खित्तो। अज्ज उण पिदुणो आराहण-समत्थो संवुत्तो त्ति कदुअ णिप्पादिदो एसो दीहाऊ आऊ। एत्तिको मे महाराएण सह संवासो। ( झ )

सर्वे। [ विषादं नाटयन्ति ]।

राजा। [ मोहमुपगच्छति ]।

सर्वे। आः! समस्ससदु समस्ससदु महाराओ। ( ञ )

कञ्चु। समाश्वसितु महाराजः।

विदू। अब्बम्हसं अब्बम्हसं!! ( ट )

राजा। [ समाश्वस्य ]। अहो! सुखप्रतिबन्धिता दैवस्य।—

आश्वासितस्य मम नाम सुतोपलब्ध्या
सद्यस्त्वया सह कृशोदरि! विप्रयोगः।
व्यावर्त्तितातपरुजः प्रथमाभ्रवृष्ट्या
वृक्षस्य वैद्युत इवाग्निरुपस्थितोऽयम्॥ ( २७ )

---

( झ ) "यदा स मम प्रियसखो राजर्षिस्त्वयि समुत्पन्नस्य पुत्रकस्य मुखं प्रेक्षिष्यते, तदा मम समीपं त्वया आगन्तव्यम्" इति। ततो मया महाराजवियोग-भीरुतया ( जातमात्र एव विद्यागमनिमित्तञ्च ) ( चिरकालसङ्गमनिमित्तञ्च ) भगवतश्च्यवनस्याश्रमपदे एष पुत्रक आर्य्यायाः सत्यवत्या हस्ते आत्मना निक्षिप्तः। अद्य पुनः पितुराराधनसमर्थः संवृत्त इति कृत्वा निष्पादित एष दीर्घायुः आयुः। एतावानेव मे महाराजेन सह संवासः।

( ञ ) आः! समाश्वसितु समाश्वसितु महाराजः।

( ट ) अब्रह्मण्यम् अब्रह्मण्यम्!!

विदू। अअं सो अत्थो अणत्थाणुबंधओ त्ति तक्केमि (अत्थभवं देवराओ सअं अणुग्गाहइदव्वो)। (ठ) (३८)

उर्व। हा! हदम्हि मंदभाइणी। किद-विणअस्स तणअस्स लंभाणंतरं सग्गारोहणेण अवसिद-कज्जां विप्पओअ-सुहीं मं महाराओ समत्थइस्सदि। (ड)

राजा। सुन्दरि! मा मैवम्।—

न हि सुलभ-वियोगा कर्त्तुमात्मप्रियाणि
प्रभवति परवत्ता शासने तिष्ठ भर्त्तुः।
अहमपि तव सूनावद्य विन्यस्य राज्यं
विचरितमृगयूथान्याश्रयिष्ये वनानि॥ (३९)

---

(ठ) अयं सोऽर्थोऽनर्थानुबन्धक इति तर्कयामि (अत्रभवान् देवराजः स्वयमनुग्राहयितव्यः)।

(ड) हा! हताऽस्मि मन्दभागिनी। कृतविनयस्य तनयस्य लम्भानन्तरं स्वर्गारोहणेनावसितकार्य्यां विप्रयोगसुखीं मां महाराजः समर्थयिष्यते।

---

(३७) आश्वासितस्येति।—हे कृशोदरि! सुतोपलब्ध्या पुत्रप्राप्त्या, आश्वासितस्य वंशस्थितिसम्भावनया प्राप्ताश्वासस्य मम त्वया सह अयं सद्यः विप्रयोगः नाम सम्भावितवियोगः, नामेति सम्भावनायां, ("नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इति कोषः), प्रथमाम्बुवृष्ट्या व्यावर्त्तितातपरुजः निवृत्तातपक्लेशस्य तिरोहितरौद्रसन्तापजदुःखस्येत्यर्थः, ("आतपो रश्मिमात्रे स्यात् सूर्य्यरश्मौ च दृश्यते" इति कोषः), वृक्षस्य वैद्युतः विद्युत्सम्बन्धी अग्निरिव उपस्थितः प्राप्तः। अत्र एकवाक्ये उपमानोपमेययोः सादृश्यादुपमालङ्कारः। वसन्ततिलकं वृत्तम्।

(३८) "तत्थभवदा वक्कलं गेण्हिअ तवोवणं गंतव्वं त्ति" इति पाठे—"तत्रभवता वल्कलं गृहीत्वा तपोवनं गन्तव्यमिति" इति सं।

(३९) नेति।—सुलभो वियोगो विरहो यस्यां सा सुलभवियोगा परवत्ता पराधीनता आत्मप्रियाणि आत्मनः अभिलषितानि कर्त्तुं न प्रभवति, अतः भर्त्तुः इन्द्रस्य शासने तिष्ठ। अहमपि अद्य तव सूनौ तव पुत्रे राज्यं विन्यस्य विचरितमृगयूथानि वनानि आश्रयिष्ये, वनेषु गमिष्यामि इत्यर्थः। मालिनी वृत्तम्।

कुमारः। नार्हति तातो महोक्ष-धारितायां धुरि दम्यं नियोजयितुम्।

राजा। अयि वत्स ! मामैवम्।—

शमयति गजानन्यान् गन्धद्विपः कलभोऽपि सन्
प्रभवतितरां वेगोदग्रं भुजङ्गशिशोर्विषम्।
भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं
न खलु वयसा जात्यैवायं स्वकार्य्यसहो गुणः॥ (४०)

आर्य्य तालव्य !—

कञ्चु। आज्ञापयतु देवः।

राजा। मद्वचनादमात्यपर्वतं ब्रूहि,—"सम्भ्रियताम् आयुष्मतो राज्याभिषेकः।"

कञ्चुकी। [ दुःखेन निष्क्रान्तः ]।

सर्वे। [ दृष्टिविघातं रूपयन्ति ]।

राजा। [ आकाशमवलोक्य ]। कुतो नु खलु भोः ! विद्युत्-सम्पातः ? [ निपुणमवलोक्य ]। अये ! भगवान् नारदः !—

---

(४०) शमयति गजानन्यानित्यादि।—गन्धद्विपः कलभोऽपि सन् शिशुरपि सन् अन्यान् गजान् शमयति निवारयति, परिभवति इत्यर्थः। गन्धगजलक्षणं यथा,—"यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः। स वै गन्धगजो नाम नृपतेर्विजयावहः॥" इति। तथा भुजङ्गशिशोः सर्पशिशोर्विषं वेगोदग्रं वेगैर्विषवेगैः "धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः"। धातवश्च सप्त। यथा—"रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः" इति। एवञ्च सप्तैव विषवेगा अपि भवन्ति। तल्लक्षणानि च विषतन्त्रे यथा,—"वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ। तस्योर्द्धंस्तत्परौ द्वौ वपुषि जनयतो वर्णभेद-प्रवेपौ॥ यो वेगः पञ्चमोऽसौ नयनविवशतां कण्ठभङ्गञ्च हिक्काम्। षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य॥" इति। उदग्रं क्रूरम् अतितीक्ष्णमित्यर्थः, सत् प्रभवतितरां मारणसमर्थं भवति। अधिपतिः राजा बालावस्थोऽपि सन् भुवं पृथिवीं परिरक्षितुं शासितुमलं समर्थः खलु। अयं स्वकार्य्यसहः स्वकार्य्यसाधनसमर्थो गुणः न वयसा न वयोवृद्धिजनितः परन्तु जात्यैव। हरिणी वृत्तम्।

गोरोचना-निकष-पिङ्ग-जटाकलापः
संलक्ष्यते शशिकलाऽमल-वीतसूत्रः ।
मुक्तागुणातिशय-सम्भृत-मण्डनश्री-
र्हैम-प्ररोह इव जङ्गम-कल्पवृक्षः ॥ ( ४१ )

अर्घोऽर्घस्तावत् ।

उर्व० । इदं भअवदो अग्घं । ( ढ )

[ ततः प्रविशति नारदः ] ।

नारदः । विजयतां विजयतां मध्यमलोकपालः । ( ४२ )

राजा । भगवन् ! अभिवादये ।

उर्व० । भअवं प्पणमामि । (ण)

नारदः । अविरहितौ दम्पती भूयास्ताम् ।

राजा । [ जनान्तिकम् ] । अपि नामैवं स्यात् ? [ प्रकाशम् ] ।
और्वशेयः पुत्त्रो वः प्रणमति ।

नारदः । आयुष्मान् आस्तामयम् ( एधि ) ।

राजा । अयं विष्टरोऽनुगृह्यताम् । ( ४३ )

---

( ढ ) एतत् भगवतोऽर्घ्यम् ।

( ण ) भगवन् ! प्रणमामि ।

---

( ४१ ) गोरोचनेति ।—गोरोचना तथा निकषः कषणोपलः, लक्षणया निकषपाषाणोपरि घृष्टकनकरेखा तयोरिव पिङ्गः कपिशो जटाकलापो यस्य सः । तथा शशिकलावदमलं शुभ्रं वीतसूत्रं यज्ञोपवीतं यस्य सः, भगवान् नारदः इति शेषः, मुक्तागुणैः मुक्ताहारैः अतिशयं सम्भृता अत्यर्थं वर्द्धिता मण्डनश्रीर्यस्य तादृशः, कल्पवृक्षस्य सर्वप्रसूत्वात् तत्र मुक्तागुणसद्भावो बोध्यः ; हैमप्ररोहः सञ्जातस्वर्णाङ्कुरः जङ्गमः गमनशीलः कल्पवृक्ष इव संलक्ष्यते । अत्रोपमाऽलङ्कारः । वसन्ततिलकं वृत्तम ।

( ४२ ) मध्यमलोकः मर्त्त्यलोकः, ( "पुंसि स्मृतौ मध्यमलोकमर्त्त्यौ" इति कोषः ) ।

( ४३ ) विष्टरः आसनम, ( "विष्टरः कुशमुष्टौ स्यादासनेऽपि महीरुहे" इति कोषः ), "वृक्षासनयोर्विष्टरः" ( ८।३।९३ पा० ) इति निपातः ।

नारदः। [तथोपविष्टः]।

सर्वे। [नारदमनुपविशन्ति]।

राजा। [सविनयम्]। भगवन्! किमागमनप्रयोजनम्?।

नारदः। राजन्! श्रूयतां महेन्द्रसन्देशः।

राजा। अवहितोऽस्मि।

नारदः। प्रभावदर्शी मघवा वनगमनाय कृतबुद्धिं भवन्तमनुशास्ति।

राजा। किमाज्ञापयति?।

नारदः। "त्रिकालदर्शिभिः आदिष्टः, सुरासुरविमर्दो भावी; भवांश्च सांयुगीनः सहायः; तेन न त्वया शस्त्रन्यासः कर्त्तव्यः। इयञ्च उर्वशी यावदायुस्ते सहधर्मचारिणी भवतु" इति। (४४)

उर्व। [अपवार्य्य]। अम्हो! सल्लं विअ हिअआदो अवणीदं। (त)

राजा। परमनुगृहीतोऽस्मि परमेश्वरेण।

नारदः। युक्तम्।—

तव कार्य्यमसौ कुर्य्यात् त्वञ्च तस्येष्टकार्य्यकृत्।
सूर्य्यः संवर्द्धयत्यग्निमग्निः सूर्य्यं स्वतेजसा॥ (४५)

[आकाशमवलोक्य]। रम्भे! उपनीयतां मन्त्रेण सम्भृतः कुमारस्याभिषेकसम्भारः।

(त) अहो! शल्यमिव हृदयादपनीतम्।

(४४) त्रिकालदर्शिभिरित्यादि।—सुराणां देवानामसुराणां दैत्यानाञ्च विमर्दः सङ्ग्रामः। सांयुगीनः संयुगे युद्धे साधुः समरकुशलः। शस्त्रन्यासः शस्त्रत्यागः।

(४५) तवेति।—असौ महेन्द्रः। "तव कार्य्यमसौ" इत्यत्र "त्वत्कार्य्यं वासवः" इति पाठान्तरम्। तस्य महेन्द्रस्य, इष्टकार्य्यकृत् प्रियकार्य्यसम्पादकः, भव इति शेषः। सूर्य्याग्नी यथा परस्परं संवर्द्धयतः तथा भवन्तावपि भवतामिति भावः। अनुष्टुप् छन्दः।

रम्भा। [प्रविश्य]। अअं से अहिसेअ-संभारो। (थ) (४६)

नारदः। उपवेश्यतामयमायुष्मान् भद्रपीठे। (४७)

रम्भा। [कुमारं भद्रपीठे उपवेशयति]।

नारदः। [कुमारस्य शिरसि कलसमावर्ज्य]। रम्भे! निर्वर्त्त्यतामस्य शेषो विधिः।

रम्भा। [यथोक्तं निर्वर्त्त्य]। वच्छ! प्पणम भअवंतं पिदरो अ। (द)

कुमारः। [सर्वान् प्रणमति]।

नारदः। स्वस्ति भवते।

राजा। वंशवर्द्धनो (कुलधुरन्धरो) भव।

उर्व०। पिदुणो दे वअणाणि होंतु। (ध)

वैतालिकद्वयम्। [नेपथ्ये]।

प्रथमः। विजयतां विजयतां युवराजः।—

अमरमुनिरिवात्रिः स्रष्टुरत्रेरिवेन्दु-
र्बुध इव शिशिरांशोर्बोधनस्येव देवः।
तव पितुरनुरूपस्त्वं गुणैर्लोककान्तै-
रतिशयिनि समस्ता वंश एवाशिषस्ते॥ (४८)

---

(थ) अयमस्याभिषेकसम्भारः।

(द) वत्स! प्रणम भगवन्तं पितरौ च।

(ध) पितुस्ते वचनानि भवन्तु।

---

(४६) सम्भारः बिल्वमोकमृत्तिकादिसामग्री।

(४७) भद्रपीठे हेमादिमये आसने; तदुक्तं देवीपुराणे,—"हैमञ्च राजतं ताम्रं क्षीरवृक्षमयं च वा। भद्रासनं प्रकर्त्तव्यं सार्द्धहस्तसमुच्छ्रितम्॥"

(४८) अमरेति।—बोधनो बुधः। "हेम्ना विज्ञो बोधनश्चेन्दुपुत्रः" इति वृहज्जातकम्। देवो राजा, पुरूरवा इत्यर्थः, ("राजा भट्टारको देवः" इत्यमरः)। अनुरूपो योग्यः, भव इति शेषः। अतिशयिनि सर्वोत्कर्षशालिनि ते वंशे कुले एव समस्ता आशिषः, सन्तीति शेषः। मालिनी वृत्तम्।

द्वितीय: ।—

तव पितरि पुरस्ताद्बद्धभावा स्थितेयं
स्थितिमति च विभक्ता त्वय्यनाकल्पधैर्य्ये ।
अधिकतरमिदानीं राजते राजलक्ष्मी-
र्हिमवति जलधौ च प्राप्ततोयेव गङ्गा ॥ (४९)

रम्भा । दिट्ठिआ सही पुत्तअस्स जुअराअ-सिरीं पेक्खिअ भत्तुणो विरहे ण वट्टदि । (न)

उर्व । साहारणो ज्जेव णो अब्भुदओ । [कुमारं हस्ते गृहीत्वा] । जाद ! जेट्ठमादरं वंदेहि । (प)

राजा । तिष्ठ, सममेव तत्रभवत्या: समीपं यास्यामस्तावत् ।

नारद: ।—

आयुषो यौवराज्यश्री: स्मारयत्यात्मजस्य ते ।
अभियुक्तं महासेनं सैनापत्ये मरुत्वता ॥ (५०)

राजा । अनुगृहीतोऽस्मि मघवता ।

नारद: । भो राजन् ! किं ते भूय: प्रियं करोतु पाकशासन: ? ।

---

(न) दिष्ट्या सखी पुत्तकस्य युवराजश्रियं प्रेक्ष्य भर्त्तुर्विरहे न वर्त्तते ।

(प) साधारण एव नोऽभ्युदय: । जात ! ज्येष्ठमातरं वन्दस्व ।

---

(४९) तवेति ।—पुरस्तात् पूर्वं तव पितरि बद्धभावा जातानुरागा सती स्थिता इयं राजलक्ष्मी: इदानीं पुन: स्थितिमति लोकमर्य्यादाऽभिज्ञे अनाकल्पधैर्य्ये अपरिमेयधैर्य्यशालिनि त्वयि विभक्ता सती हिमवति हिमालये जलधौ च समुद्रे च प्राप्ततोया गङ्गेव अधिकतरं राजते शोभते, गुणवत एकस्य तव पितुराश्रये स्थिता राजलक्ष्मी: प्राक् यथा अशोभत, इदानीं त्वामपि गुणवन्तमाश्रयं प्राप्य गुणवदाश्रयद्वयप्राप्ता ततोऽप्यधिकतरं शोभते इति भाव: । "बद्धभावा" इत्यत्र "उन्नतानां" तथा "स्थितेयम्" इत्यत्र "स्थितेऽस्मिन्" इति पाठान्तरम् । मालिनी वृत्तम् ।

(५०) आयुषो यौवराज्येति ।—ते आत्मजस्य आयुषो आयुर्नामधेयस्य

राजा। अतः परमपि प्रियमस्ति? यदि भगवान् पाकशासनः प्रसादं करोतु ततः,—

[ भरतवाक्यम् ] ।—

परस्पर-विरोधिन्योरेकसंश्रय-दुर्लभम् ।
सङ्गतं श्री-सरस्वत्योर्भूयादुद्भूतये सताम् ॥ ( ५१ )

अपि च ।—

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु ॥ ( ५२ )

[ इति निष्क्रान्ताः सर्वे ] ।

इति श्रीकालिदासकृते विक्रमोर्वशीनामत्रोटके पञ्चमोऽङ्कः ।

---

यौवराज्यश्रीः यौवराज्यशोभा, मरुत्वता इन्द्रेण सेनापतेर्भावः सैनापत्यं तत्र अभियुक्तं नियुक्तं, महासेनं कार्त्तिकेयं, स्मारयति स्मृतिगोचरीकरोति । अत्र स्मरणालङ्कारः । अनुष्टुप् वृत्तम् ।

( ५१ ) परस्परेति ।—सतां साधूनामुद्भूतये वृद्धये परस्परविरोधिन्योः श्रीसरस्वत्योरेकसंश्रये एकाधारे दुर्लभं सङ्गतं मिलनं भूयात्, विद्वांसो धनिनो भवन्तु इत्यर्थः ।

( ५२ ) सर्व इति ।—दुर्गाणि दुःखानि । भद्राणि कल्याणानि । कामान् अभिलाषान् । सर्वत्र सर्वस्मिन् स्थले सर्वस्मिन् समये च नन्दतु आनन्दं प्राप्नोतु ।

इति पण्डितकुलपतिना श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्येण विरचिता विक्रमोर्वशीव्याख्या ।

